## || अथ षट्पिंडविधिः ||

( ततो गतसुं ज्ञात्वा पुत्रादेः स्नानं; ततो अपसव्यं कृत्वा मृतंशरीरस्य घृतेनाभ्यंजनं; सशिरकस्यस्नापनं; पूर्वघृत वस्त्रद्वयस्य त्यागः; पुनरहतवस्त्रद्वयं परिधाप्य उपवीतद्वयं च परिधापयेत्; ततश्चंदनेन सर्वांगेषु प्रोक्षणं; पुष्पैरलंकरणं; ततो मृतस्य मुखभवेषु सप्तछिद्रेषु हिरण्यशकलानि प्रक्षिप्य वस्त्रेण पिधाय निर्हरणं कार्यं; अत्र दुर्मरणाशंकायां तन्निमित्तं प्रायश्चित्तं कृत्वा निर्हरणं कार्यं; भूमौ उत्तरदिक्शिरसं शाययित्वा दाहकर्ता तस्य पार्श्वे (डाहिनी बाजु) दक्षिणाभिमुखः स्थित्वा )

–तूष्णीं आचम्य; प्राणानायम्य|

–संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य ऊर्ध्वोच्छिष्ट अधोच्छिष्ट स्पृष्ट अस्पृष्ट खट्वादि षट्त्रिंशद्दुर्मरणान्तर्गत किन्चिद्दुर्मरणजनित प्रत्यवाय परिहारार्थं यथाशक्ति(पन्च दश द्वादश त्रीन् वा प्राजापत्यान्) कृच्छरूपं प्रायश्चित्तम् अमुकप्रत्याम्नायेन सूतकान्ते करिष्ये|

( सव्यं )

–संकल्पः– अद्येत्यादि–––तिथौ० ममात्मनः शुद्धिसम्पादनार्थं ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य और्ध्ववदेहिककर्म अधिकारार्थन्च यथाशक्ति एतावत्कृच्छात्मकं प्रायश्चित्तम् अहं करिष्ये|( ततो मृतस्य स्थाने एकोद्दिष्टविधिनाश्राद्धं; तत्रसर्वममंत्रकं; ब्राह्मणाभावे एकं दर्भ चटुं निधाय सर्वं कुर्यात् )

–उत्क्रांतिश्राद्ध ( द्वारदेशेश्राद्ध; चत्वरदेशेश्राद्ध; विश्रमणस्थानेश्राद्ध; चितास्थानेश्राद्ध; शवहस्तेश्राद्ध ) निमित्तं एतत्ते पाद्यं पादावनेजनं; एतद्वोर्ध्यं; इदमत्र चंदनं पुष्पं|

( सव्यं )

( स्वपाद प्रक्षालनं; तूष्णीं प्राणायामः )

( अपसव्यं )

–पिंडद्रव्यस्यप्रोक्षणं; श्राद्धोपहाराः पूता भवन्तु; देशकालपाकपात्रद्रव्यश्रद्धासंपत्|

( सव्यं )

–संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वनिवृत्यर्थं दाहादियोग्यताप्राप्त्यर्थं उत्क्रांतिस्थाने ( द्वारदेशे; चत्वरदेशे; विश्रमणस्थाने; चितास्थाने; शवहस्ते ) एकोद्दिष्टविधिना एकतंत्रेण श्राद्धं अहं करिष्ये|

– अमुकगोत्राय अमुकप्रेताय इदं ते आसनं|

( आवाहनार्घार्च्चनपात्रालंभावगाहनानामभावः; आचमनं )
–दास्यमानं आमान्नं सघृतं अमुकगोत्र अमुकप्रेत एतत्ते उपतिष्ठतां| ( ततः पिंडदानं; तत्र अवनेजन रेखा प्रत्यवनेजन गंधार्घनानामभावः; भूमौ पिंडदानं )

–अमुकगोत्र अमुकप्रेत शव( पांथ; खेचर; भूत; साधक; प्रेत) एष ते पिंडः|
( आचमनं; आशीःप्रार्थना स्वधावाचनापांनिषेकानामभावः )

–कृतैतत् प्रेतैकोद्दिष्ट सांगता सिद्धये दक्षिणां दास्यमानं अमुकगोत्र अमुकप्रेत ते उपतिष्ठतां| ( उत्क्रांतिश्राद्धे )
–कृतैतत् प्रेतैकोद्दिष्ट सांगता सिद्धये माषान्नसहितजलकुंभदानं दास्यमानं अमुकगोत्र अमुकप्रेत ते उपतिष्ठतां| ( अन्यानिश्राद्धे; पिंडचालनं; चितास्थाने दत्तस्य पिण्डस्य चितायां प्रक्षेपः; शवहस्ते दत्तस्य पिण्डस्य शवहस्ते एव निधानम्; अन्यान् पिंडान् जले प्रक्षिपेत्; नस्वस्तिवाचनं )

–अस्य उत्क्रांतिस्थाने ( द्वारदेशे; चत्वरदेशे; विश्रमणस्थाने; चितास्थाने; शवहस्ते ) श्राद्धस्य विधेर्यन्यूनमतिरिक्तं तद्विष्णोः प्रसादात् परिपूर्णं|
( चटुविसर्गः )
* ( गृहाद्यथा प्रेतस्य शिरोभागः प्रथमं बहिर्याति तथा प्रेतं बहिर्निष्कासयेत्; ततः श्मशान सन्निधौ भूमौशनैः शवस्य दक्षिणाशिरसः स्थापनं; ततः चितास्थाने साधक पिंडदानं; ततः सर्वाणि तीर्थानि मनसा ध्यात्वा शवस्य स्नापनं; अथ पुत्रादिः स्नात्वा शुद्धे दक्षिणाप्रवणे भूप्रदेशे कृतापसव्यो दक्षिणाभिमुखः सकृशकृशंमार्जनादि भूसंस्कारान्विधाय तत्राग्निः स्थापनं; ततो दक्षिणायतां अशूद्राहूतैः काष्टैश्चिता कृत्वा तत्रोत्तानं दक्षिणाशिरसं शवं निदध्यात्; प्रेतसंबंधि वस्त्रं द्वेधा कृत्वा एकेन खंडेन प्रेत शरीरमाछाद्य खडांतरं भूमौ श्मशानवास्यर्थं निरस्येत्; ततः प्रेतस्य दक्षिणकरे प्रेतनाम्ना पिंडदानं; अथ स्मार्त्तपात्राणां प्रतिपत्तिः; आज्य पूर्णाम् स्त्रुचं दधिणाग्रांमुखे न्यसेत्; नासिकयोः स्त्रुवमाज्यपूर्णं दक्षिणाग्रं; पादयोः प्रागग्रामधरारणिं; उत्तरारणिं प्रागग्रामुरसि; सव्यपार्श्वे दक्षिणाग्रं शूर्पं; दक्षिण पार्श्वे दक्षिणाग्रं चमसं; ऊर्वोर्मध्ये अधोमुखे लूखलमुसले; तत्रैवचात्रं; ऊवेलीच; अन्यानि सर्वाणिद्रव्यादीनि तत्रैवच; चात्रीविलीकयोलग्नंलोहकीलकपट्टिकादि ब्राह्मणाय देयमप्सुवा प्रक्षेप्यं; इदं पूर्वोक्तं वक्ष्यमाणं च यत्कर्मतसर्वमपसव्येन कार्यं )

## || अथ पंचकमृतस्य दाहविधिः ||

– आचम्य तूष्णीं प्राणानायम्य|
–संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य धनिष्ठादिपंचकमरणजनित वंशारिष्ट निरासार्थं पंचकमरणविधिं करिष्ये| ( कुशमय पुत्तलकपंचकरणं; ऊर्णासूत्रेणवेष्टनं; यवपिष्टेनानुलेपनं; ततो दक्षिणसंस्थं पुत्तलक पंचकंसन्यस्य नाम निर्देशं कुर्यात् )

३ १ २ ३२उ ३ २३ १२ ३१२ १ २ ३ १ २
–ओम् इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्| अनाभयिव्ररिमा ते||–प्रेतवाहाय नमः|

३ २३ १२३ १२ ३ १ २ ३ १ २ १ २र ३१२ ३ २३ २३२ ३१२
–ओम् यदाकदाचमीढुषे स्तोता जरेत मर्त्यः|आदिद्वन्देतवरुणंविपागिराधर्त्तारंविव्रतानाम्||
–प्रेतसखे नमः|

३ २ ३१ २र ३ १२ ३ १ २ ३१२ ३क२र
–ओम् ईशान इमा भुवनानि ईयसे युजान इन्दो हरितः सुपर्ण्यः|
१ २ ३ १२ ३२उ ३ १२ ३१ २ ३ १२
तास्ते क्षरन्तु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठन्तु कृष्टयः||–प्रेतपाय नमः|
२३ २ ३१ २ ३१ २
–ओम् अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः|
१२ ३ १ २र ३२३ १ २ ३ १ २
ईशानमस्य जगतः स्वर्द्दशमीशानमिन्द्र तस्थुषः||–प्रेतभूमिपाय नमः|
३ २ ३ १२ ३१ २ ३ १ २र ३ १२ ३ १२
–ओम् शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि|
२ ३ २ ३ १ २र ३ १ २ ३२ ३ १२
विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु||–प्रेतहर्त्रे नमः|
( ततः पुष्पाद्यैः प्रतिमा अलंकृत्य दाहसमये प्रेतो परि न्यसेत् )

–प्रथमां शिरसि; द्वितीयां नेत्रयोः; तृतीयां कुक्षौ; चतुर्थं नाभौ; पंचमी पादयोः|

( ततः तूष्णीमाज्यं संस्कृत्य तदुपरिताभ्यो नाममंत्रैर्घृताहुतीर्जुहुयात )
–प्रेतवाहाय स्वाहा; प्रेतसखे स्वाहा; प्रेतपाय स्वाहा; प्रेतभूमिपाय स्वाहा; प्रेतहर्त्रे स्वाहा|
( ततो जलपात्रेण परितो जलधारां दत्वा प्रेतस्य मुखे पंचरत्नं निक्षिप्य; मंत्राभ्यां प्रतिमासु प्रत्येकमाहुती र्जुहुयात् )

१ २ ३२उ ३ १ २र ३ १ २र ३ १२
–ओम् नाके सुपर्णमुप यत्पतन्त ँ हृदा वेनन्तो अभ्यचक्षत त्वा|
१ २ ३ १२ ३ २ ३२ ३ १ २ ३ १ २३ २
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्||–स्वाहा|
–ओम्त्र्यम्बकंयजामहेसुगन्धिंपुष्टिवर्धनम्;ऊर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात्|–स्वाहा
|
( ततस्तदग्नौ आज्याहुतित्रयं जुहुयात् )

–ओम् वह वपां जातवेदः पितृभ्यो यत्रैतान वेत्थ निहितान् पराचः;
मेदसःकुल्याअभि तान्त्स्त्रवन्तु सत्या एषामाशिषः सन्तु कामात्स्वाहा–इदंजातवेदसेनमम|
–ओम् जातवेदो वपया गच्छ देवांस्त्वं हि होता प्रथमो बभूव;
सत्या वपा प्रगृहीता मे अस्तु समृद्धयतां मे यदिदं करोमि स्वाहा–इदं जातवेदसे नमम|
–ओम् यत्कुसीदमप्रदत्तम् मयेह येन यमस्य निधिना चराणि;
इदं तदग्ने अनृणो भवामि जीवन्नेव प्रति तत्ते ददामि स्वाहा–इदं अग्नये न मम|
( ततो विधिना प्रेतं दहेत् )

|| इति पंचकमृतस्य दाहविधिः ||

– अथ प्रेतस्य दाहविधिः|
( प्रेतस्य शिरःप्रदेशे दक्षिणादिशि अग्निस्थापनं कार्यम् )
( सव्यं )
–संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य दाहार्थं कपालाग्निसिद्धयर्थं आज्येन समस्तव्याहृतिभिः सकृद् होमं करिष्ये|
( गृहादानीते लौकिकाग्नावेकां घृताहुतिं )
– ओम् भूर्भुवःस्वः स्वाहा–इदं प्रजापतये नमम| ( भूमौ पन्चभूसंस्कारान् कृत्वा तमग्निं पुनर्भूमौ स्थापयेत् )
–पंचभूसंस्काराः|
१, दर्भैः परिसमुह्य परिसमुह्य परिसमुह्य| ( त्रिभिः कुशैः कुण्डस्य स्थण्डिलस्य वा पश्चिमभागाद् आरभ्य प्रान्चं त्रिवारं संमृज्य )
२, गोम्यादकाभ्यामुपलिप्य उपलिप्य उपलिप्य| ( तथैव गोमयेन त्रिवारं उपलिप्य ) ततो वामहस्तम् अग्निनिधानपर्यन्तं कुण्डे स्थण्डिले वा निधाय|
३, कुशमूलेन उल्लिख्य उल्लिख्य उल्लिख्य| ( दक्षिणहस्तेन कुशमूलेन कुण्डस्य स्थण्डिलस्य वा सार्धांगुलमितां भूमिं दक्षिणतः त्यक्त्वा प्राग्गतां प्रादेशमात्रां लेखाम्; तन्मूललग्नाम् उदग्गतांद्वितीयां एकविंशत्यंगुलमितां लेखाम् उल्लिख्य; प्रथम रेखायाः उत्तरस्यां सप्तांगुलम् अन्तरं त्यक्त्वा प्रादेशमात्राः तिस्त्रः रेखाः कुर्यात् )
४, अनामिकांगुष्ठेन उद्धृत्य उद्धृत्य उद्धृत्य| ( उल्लेखनक्रमेण प्रान्चं उदन्चं च अनामिकांगुष्ठाभ्यां पांसून् नीत्वा ऐशान्याम् अरत्निमात्रप्रदेशे निक्षिपेत् )
५, उदकेन अभ्युक्ष्य अभ्युक्ष्य अभ्युक्ष्य| ( जलेन ता अभ्युक्ष्य )
( ततः तिलानादाय )
–ओम क्रव्यादमग्निम्प्रहिणोमिदूर ँ यमराज्यड्गच्छतुरिप्रवाहः;
इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन्|–क्रव्यादग्नये नमः इति सम्पूज्य||
( पुनः तस्मिन्नग्नौ घृतेनैकामाहुतिं दद्यात् )
–ओम् अस्मात्वमधिजातोसित्वदयन्जायतां पुनः;( असौ )स्वर्गाय लोकाय स्वाहा|–इदं अग्नये नमम|| ( असौ के स्थान पर मृतक के नाम का उच्चारण करे; ततः चितायां प्रेतस्य मुखे तूर्ष्णीं घृताहुतिं दद्यात्; ततः तस्मिनन्नग्नौ बहुतृणपूलिं प्रज्वाल्य तमग्निं दक्षिणहस्तेनादाय प्रेतस्य अप्रदक्षिणं परिक्रम्य मन्त्रद्वयं पठन् प्रेतस्य मुखेऽग्निदानं; स्त्री के पा ँ व समीप कुर्यात् )

–कृत्वा सुदुष्करं कर्म  जानता वाऽप्यजानता; मृत्युकालवशं ज्ञात्वानरंपन्चत्वमागतम्|
धर्माधर्मसमायुक्तं लोभमोहसमावृतम्; दहेयं सर्वगात्राणि दिव्या ँ ल्लोकान्सगच्छतु||
(इति प्रेतस्य मुखे;स्त्रीणां पा ँ वे अग्निं दत्वा उत्तराभिमुखो भूत्वा " ओम् " इति प्रैषं कृत्वा गाठं रोदनं कुर्यात्)
– अथ उदकदानं|
( पुत्रादयः सर्वेकनिष्ठपुरः सरानद्यावागत्य परिहितं वस्त्रं प्रक्षाल्य तदेव परिधाय पुत्रादयः सपिंडाः समानोदकाश्च वृद्धपूर्वा  उदकं प्रविश्य एक वस्त्रा अशिखाः प्राचीनावीतिनः सव्यपाणेरनामिकया नद्यादिस्थं जलमपनोद्य अपनःशोशुचदघं इत्येतावतामंत्रेण अपसार्य दक्षिणामुखाः सकृन्निमज्जंति युगपदंगोद्वर्त्तनम कूर्वन्तः; ततः प्रेताय दाहोपशांत्यर्थं उदकंदद्युः; तच्चेत्थं; तटे आगत्य आचम्य शिखां बध्वा दक्षिणाग्रान् रुजून्कुशान्हस्तयोः कृत्वा सतिलमुदकं पाणिभ्यामादाय दक्षिणाभिमुखावग्यताः पितृतीर्थेन एकैकमंजलिंत्रीस्त्रीन्दशवादद्युः )
–अमुकगोत्र अमुकप्रेत ऐतत्ते सतिलतोयांजलि रुप तिष्ठतां|
–अमुकगोत्र अमुकप्रेत स्त्रृप्यतु|
–अमुकगोत्रं अमुकप्रेतं तर्पयामि|( इति वा )
( यथा स्वगृह्ये प्रयोगः; छंदोगैस्तु प्रथमांत पद प्रयोगे तर्पणं कर्त्तव्यं; अग्निस्तृप्यत्वित्यादि तथा प्रयोग दर्शनात्; ततो दंतधावनं विधाय स्नात्वा आवम्य वस्त्रतराणिपरिधाय स्नान वस्त्राणि सकृदेवनिः पीड्य उदकदेशान्निः सृत्यशुचौ देशे मृदुतृणवति सर्वे उपविशंति; इत्युदकदानं )
–माशोकं कुरुतानित्येसर्वस्मिन्प्राण धर्मणि; धर्मं कुरुतयत्नेनयोवः सह गमिष्यति|
मानुष्येकदलीस्तंभनिःसारेसार मार्गणं; यः करोति ससंमूडोजलबुद्बुदसन्निभे|
गंत्रीवसुमती नाशमुदधिर्दैवतानि च; फेनप्ररूय कथं नाशं मृत्युलोकोनयास्यति|
पंचदासंमृतःकायोयदि पंचत्वमागतः; कर्मभिः स्वशरीरोत्थैस्तत्रकापरिदेवना|
ॅसर्वे क्षयांतानिचयाःपतनांताः समुच्छया; संयोगा विप्रयोगांतामरणांतंहि जीवितं|
श्लेष्माश्रुबांधवैर्मुक्तं प्रेतोभुंक्तेयतोवशः; अतोनरोदितव्यंहि क्रियाः कार्याः प्रयत्नतः|
( इति शोकापनोदकानि वाक्यानि; ततो ब्राह्मणैरनुज्ञातास्ततउत्थाय पश्चादनवलोकयं– तोधोमुखाः कनिष्ठानग्रे कृत्वा पंक्तिभूता एव ग्रामंत्यायांति; दिवामृतेऽस्तमयादूर्ध्वंग्रामं प्रविशंति; रात्रौमृतेसूर्योदयानंतरं; अथवा ब्राह्मणैरनुज्ञातास्तदानीमेव प्रविशंति; ततोगृहद्वार समीपे आगत्य सर्वे त्रीणित्रीणिनिंवपत्राणिदंतैर्विदश्याचम्य; शमीपापंशमयतु इति शमीमालभंते; अश्मेवस्थिरो भूयासमित्यश्मानं; अग्निर्नःशर्मयछतुइत्यग्निं; तूष्णीमुदकं; गोमयंगौरसर्षपांस्तैलदूर्वाप्रवालान्वृषभंच यथा क्रमं तूष्णीमालभ्य ततः पादेन पाषाणमाक्रम्य गृहं प्रविशंति; इति प्रवेशः )

## || अथ अस्थिसंचयनम् ||

( तच्चसंवर्त्तेनतु प्रथमतृतियसप्तमनवमादिषु दिवसेषुक्तं; कर्मप्रदीपे कात्यायनेनतु द्वितीयेतृतीयेवा दिवसे कार्य नित्युक्तं; कात्यायनसूत्रेतुदामदिवसाच्चतुर्थ्यां तिथावुक्तं; स्वस्वसूत्रानुसारेण सर्वैःकार्यं; छंदोगैस्तुद्वितीयेतृतीयेवा दिवसे कार्यं; तत्र सामग्रीं– गोदुग्धं; गोघृतंच; तिलाः; एकाशमीशाखा; द्वितीयपलाशशाखा; कर्पूरांगरुचंदन कस्तूरिका केसरमिति सुगंधिद्रव्याणि; मृत्पात्रसंपुटं; सूत्र; पिंडदानार्थंद्रव्यंषिष्टादि; मधुशर्करा च; एतान्यादाय दाहभूमिं गत्वा तत्र तीर्थादौ एक वस्त्राः प्राचीनावीतिनो दक्षिणामुखाः पुत्रादयः स्नानंकुर्युः; अनंतरं भूमौपाषाणेवा प्रथमदिवसवत्तर्पणं कुर्युः; तदनंतरं स्नानं )

– आचमनं| ( मंत्ररहित; दाहदेशसमीपे गत्वा उपविश्य )

–संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तयर्थं दाहतापोपशांत्यर्थं अस्थिसंचयनमहं करिष्ये|( गोदुग्धेन सर्वाण्यस्थिनिसिंचेत्; ततः शमीपलाशशाखाभ्यां भस्मनःसकाशादुद्दृत्य एकत्रचयं कृत्वा गव्येनाज्येनाभ्यज्य पूर्वोक्त सुगंधवारिणासिंचेत्; ततस्तान्यस्थिनिमृत्पात्रसंपुटे कृत्वा तत्संपुटं सूत्रेण परिवेष्टय शुचौ देशे भ्रंखात्वा दक्षिणामुखस्तस्मिन्गर्त्ते तत्संपुटं न्यसेत्; ततः सेवालयं युक्तं कद्र्दमपिंडं संपुटो परिदत्वा सुमृदा गर्त्तं पूरयेत्; ततोऽस्थिसमूहं भस्मसमूहं च तीर्थे प्रक्षिप्य दाह भूमेः संमार्जनादि कृत्वा तत्रास्थिसंचयनांगं पिंडदानं कुर्यात् )

–तूष्णीं प्राणायामः|( पिंडद्रव्यस्य प्रोक्षणं )

–संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तयर्थं अस्थिसंचयननिमित्तं पिंडदानमहं करिष्ये|(समूलंदक्षिणाग्रंकुशमास्तीर्य)

– अमुकगोत्र अमुकप्रेत अवनेनिक्ष्व|
– अमुकगोत्र अमुकप्रेत एष ते पिंडः| ( प्रत्यवनेजनं; ततः पिंडोपरिसूत्रप्रक्षेपः )
– अमुकगोत्र अमुकप्रेत अयंते वास उपतिष्ठतां|
– अमुकगोत्र अमुकप्रेत अयंते गंधउपतिष्ठतां०|
– अमुकगोत्र अमुकप्रेत इदंते पुष्पं उपतिष्ठतां|
– अमुकगोत्र अमुकप्रेत इदंते भृंगराजपुष्पं उपतिष्ठतां|
– अमुकगोत्र अमुकप्रेत इदंते तुलसीदलानि उपतिष्ठतां|
– अमुकगोत्र अमुकप्रेत धूपोयंते उपतिष्ठतां|
– अमुकगोत्र अमुकप्रेत दीपोयंते उपतिष्ठतां|
– अमुकगोत्र अमुकप्रेत शीतमुदकंते उपतिष्ठतां|
– अमुकगोत्र अमुकप्रेत इदं नैवेद्यंते उपतिष्ठतां|
– अमुकगोत्र अमुकप्रेत समाचारात् अर्घोयंते उपतिष्ठतां|
– अमुकगोत्र अमुकप्रेत क्षुधानिवृत्यर्थं दास्यमानं आमान्नंते उपतिष्ठतां|
– अनेन आमान्नदानेन अमुकगोत्रस्य अमुकप्रेतस्य क्षुधानिवृत्तिः|

–संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तयर्थं अस्थिसंचयनांग पिंडदान कृतस्यविधेः परिपूर्ण।
–अनेन अस्थिसंचयनांग पिंडदानेन अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तिः।
( अग्रयकर्मयोग्यतावाप्तिः; ततः पिंडस्याप्सुप्रक्षेपः; संचयनानंतरं यद्वस्तु जीवतोयदिष्टं अन्नवस्त्राभरणादि तत्सर्वं प्रेतस्योपकाराय ब्राह्मणेभ्योदेयं )

–संकल्पः– अद्येत्यादि–––तिथौ० इदं वस्त्राभरणान्नादि दीयमानंदास्यमानं वा ( अपसव्यं ) अमुकगोत्र अमुकप्रेत ते उपतिष्ठतां।
–अमुकगोत्रस्य अमुकप्रेतस्य तत्तद्दानजन्यफलावाप्तिः।

|| इति अस्थिसंचयनम् ||

## || अथ तीर्थे अस्थिप्रक्षेपः ||

*( ततस्तीर्थं प्राप्य स्वयं तीर्थ प्राप्तिनिमित्तं स्नानादिकं कृत्वा )

–संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेताक्षिस्य प्रेतत्व विमुक्तये ब्रह्मलोकादिप्राप्तये अमुकतीर्थे अस्थिप्रक्षेपमहं करिष्ये|
( सम्पुटादस्थीनि पलाशपुटे निधाय पंचगव्यं तत्र निधाय पुनः सर्वाण्यस्थीनि मृत्पिण्डे (शरावे) निधाय स्वयं दक्षिणांदिशमवेक्षमाणो )

–नमोऽस्तु धर्माय| ( इति वदन् तीर्थं प्रविशन् नाभिमात्रे जले स्थित्वा )
–स मे प्रीतोऽस्तु|( इति वदन् तीर्थजले अस्थिनि प्रक्षिपेत्; ततः स्नानं विधाय बहिरागत्य सूर्यमवेक्ष्य विष्णुं स्मृत्वा )

–संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तये ब्रह्मलोकादिप्राप्तये कृतस्य अमुकतीर्थे अस्थिप्रक्षेपस्य सांगता सिद्धयर्थं यथाशक्ति रजतद्रव्यं चन्द्रदैवतं ( सव्यं ) अमुकशर्मणे तुभ्यं अहं संप्रददे|

## || इति तीर्थे अस्थिप्रक्षेपः ||

## || अथ दशाहश्राद्धम् ||

–अमंत्रं आचम्य प्राणानायम्य कुशोपग्रहः|
( दक्षिणाभिमुखः उपविश्य )
( अपसव्यं ) –मनसैव विष्णुमंत्र स्मरणेन जलमभिमंत्र्य तेनोदकेन पिंडद्रव्यं संप्रोक्ष्य पिंडद्रव्योपहाराणां च पवित्रता|

( सव्यं ) देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु; अस्तु|
संकल्पः– अद्येत्यादि–––तिथौ ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वनिवृत्त्यर्थम् प्रथमदिनं आरभ्य दशाहपर्यन्तं क्षुतृषानिवृत्यर्थं शिरःप्रभृति क्षुत्पिपासान्त अवयव निष्पत्यर्थं एकतंत्रेण पिंडदानमहं करिष्ये|
( दक्षिणायतांकर्षूम् कृत्वा; तत्रसमूलदक्षिणाग्रदर्भास्तरणं; पात्रे जलमादाय )
–अमुकगोत्र अमुकप्रेत अवनेनिक्ष्व|( ततः तिलघृतक्षीरमधुशर्करामिश्रं पिंडमादाय )
–प्रथमदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य शिरोवयव निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|
–द्वितीयदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य चक्षुःश्रोत्रनासावयव निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|
–तृतीयदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य ग्रीवामुखभुजवक्षसां निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|
–चतुर्थदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य नाभिलिंग(योनि)गुदावयव निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|
–पंचमदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य ऊरुजानुजंघाद्यवयव निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|
–षष्ठदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य गुल्फपादांगुलिमर्माद्यवयव निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|
–सप्तमदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य अस्थिमज्जाशिराद्यवयव निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|

–अष्टमदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य नखलोमाद्यवयव निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|
–नवमदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य मर्मविर्य(रजः)आदिसर्वायव निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|
–दशमदिननिमित्तं अमुकगोत्रस्य अमुकप्रेतस्य क्षुत्पिपासा निष्पत्यर्थं अमुकगोत्र अमुकप्रेत एष ते पिंडः|(इतिरूजूहस्तेनपिंडं दद्यात्;ततःपिंडपात्रप्रक्षालन्जलेनप्रत्यवनेजनं)
–अमुकगोत्र अमुकप्रेत प्रत्यवनेनिक्ष्वद्य ( तूष्णींसूत्रतंतुदानं )
पिंडे अत्र उपतिष्ठतु० ऊर्णासूत्रं मद्दतं तवोपतिष्ठताम्० गंधोयंते उपतिष्ठतां० तिलाक्षतमुपतिष्ठतु० एवं पुष्पाणि ते उपतिष्ठतां० एवं तुलसीदलाणि ते उपतिष्ठतां० धूपोयंतउपतिष्ठतां० दीपोयंतउपतिष्ठतां०अर्घोयं ते उपतिष्ठतां० नैवेद्यमिदंतेउपतिष्ठतां० शेषोपचारार्थे तिलकुशाउपतिष्ठंतु|
–पिंडस्यार्चनविधेः परिपूर्णं|
–अनेन पिंडदानेन अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तिः; पुण्यलोकप्राप्तिः|
–अमुकगोत्रस्य अमुकप्रेतस्य क्षुधानिवृत्यर्थं दास्यमानं आमान्नं ते उपतिष्ठताम्|
–अनेन आमान्नदानेन अमुकगोत्रस्य अमुकप्रेतस्य क्षुधानिवृतिः|
–अमुकगोत्रस्य अमुकप्रेतस्य तृषानिवृत्यर्थं सतिलतोयांजलिदानमहं करिष्ये|
(रूजून्कुशान्हस्तेकृत्वासतिलतोयांजलिदद्यात्१;३;५;७;९;११;१३;१५;१७;१९इतिक्रमेण१००अंजलिदद्यात्)
–अमुकगोत्रं अमुकप्रेतं तर्पयामि|
–अमुकगोत्र अमुकप्रेत एष ते सतिलतोयांजलि रुप तिष्ठताम्|
–अमुकगोत्र अमुकप्रेत स्त्रृप्यतु|( इति वा यथा स्वाचारं कर्त्तव्यं; तर्पणांते )
–अनादिनिधनो देवः शंखचक्रगदाधरः; अक्षय्यः पुंडरीकाक्षः प्रेत मोक्ष प्रदो भव|
( सव्यं )संकल्पः– अद्यपूर्वोच्चरित–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्वनिवृत्यर्थं प्रथमदिनं आरभ्य दशाहपर्यनतं क्षुतृषानिवृत्यर्थं एकतंत्रेण पिंडदानतर्पण कृतस्य विधेर्यन्यूनमतिरिक्तं तत्सर्वं श्रीःविष्णोः प्रसादात्परिपूर्णं|
–अनेन पिंडदानतर्पणकृतेन अमुकगोत्रस्य अमुकप्रेतस्य क्षुतृषानिवृत्तिपूर्वकं शिरःप्रभृति क्षुत्पिपासान्त अवयव निष्पत्तिः| ( ततः पिंडोद्धरणं )

( ततः पिंडदानानंतरं सूतक निवृत्यर्थं सर्वेसपिंडाः केशश्मभुवपनं कारयेयुः; नखलोमकृंतनंच; इदं च मृतादल्यवयसांसंवंधेनापिकनिष्ठानां भवति; ततः प्रेतसंबंधि कर्मकालपरिहितवस्त्रत्यागः; तिलकल्केनतिलतैलसंयुतेनशिरःस्नानं च कृत्वा; अहतंवासोयुग्मन्यत्परिधाय गां सुवर्णदूर्वादीनि मंगलद्रव्याणि स्पृष्टवा शुद्धिं संकीर्त्तयित्वा शुद्धाभवंति; गृहेपिसर्वाणिवस्त्राणि गुप्तदोरकादीनीचक्षालीयानि; मृन्मयानांभांडानां सूतकि संपृष्टानां परित्यागः; गृहस्य संमार्जनमुपलेपनं कार्यं; तत्र आबालं सर्वेस्रांति;एवं कृते शुद्धिर्भवतिनान्यथा; ततःशन्नोदेवीरित्यादि ऋक्भिरबोध्याद्यरिष्ट वर्गादिवर्गेण शांत्युदकम् अभिमंत्र्यतेनोदकेन गृहस्य आबालं सर्वेषां प्रोक्षणं )

विनियोगः—शन्नः सिन्धुद्वीपो गायत्र्यापः; आपोहिष्ठेति तिसृणां सिन्धुद्वीपो गायत्र्यापः; उपास्मै इति त्रयाणामसितः गायत्री सोमः; दविद्युतत्येति त्रयाणां कश्यपः गायत्री सोमः; पवमानस्येति त्रयाणां वैखानसः गायत्री सोमः; तरत्सेति त्रयाणामवत्सारो गायत्री सोमः; एतोन्विन्द्रेति तिसृणां तिरश्चनुष्टुबिन्द्रः; तमुष्टवामेति तिरश्चनुष्टुबिन्द्रः; नकि इन्द्रेति वामदेवो गायत्रीन्द्रः; पवित्रंते इति तिसृणां पवित्रो जगती सोमः; अभिमंत्रणे विनियोगः|

— १ २ ३ २३१ २३ १ २ ३१२ २उ३ १ २

ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||(१)

२ ३ १ २र३२३ १ २ ३ १ २ ३१ २र३ १२

ओम् आपो हिष्ठा मयोभुवस्ता न ऊर्जेदधातन| महे रणाय चक्षसे||(२)

१ २ ३ १२३ २ ३ १ २ ३१ २ ३ १ २ ३ १२

यो वः शिवतमो रसस्तस्य भाजयतेहनः| उशतीरिव मातरः||(३)

२ ३ १२ ३ २ ३ १ २३ १ २ १ २ ३ १२

तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ| आपो जनयथा च नः||(४)

१ २ ३ १ २ ३१ २ ३ २ ३ १ २र

ओम् उपास्मै गायता नरः पवमानायेन्दवे| अभि देवा ँ इयक्षते||(५)

३ २ ३ १ २३ १ २र ३ २ ३१ २ ३२

अभि ते मधुना पयोथर्वाणो अशिश्रयुः| देवं देवाय देवयु||(६)

१ २ ३ २उ ३ १ २र३ १ २र १ २३ १२

स नः पवस्व शं गवे शं जनाय शमर्वते| श ँ राजन्नोषधीभ्यः||(७)

१ २ ३ १ २३ १ २ ३२ १ २ ३१ २र

दविद्युतत्या रुचा परिष्टोभन्त्या कृपा| सोमाः शुक्रा गवाशिरः||(८)

३ २ ३१२ ३ १ २र३क२र १ २ ३१ २
हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत्| सीदन्तो वनुषो यथा||(९)
३ १ २ ३ १२ ३ २ ३ १ २ १२ ३ १ २ ३ २
ऋधक्सोम स्वस्तये संजग्मानो दिवा कवे| पवस्व सूर्यो दृशे||(१०)
१२ ३ २ ३ १ २ १ २ ३ १ २३ १ २
पवमानस्य ते कवे वाजिंत्सर्गा असृक्षत| अर्वन्तो न श्रवस्यवः||(११)
२ ३ १ २ ३ २ ३१२३ १ २३ १ २ १ २ ३ १२
अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये| श्रवावशन्त धीतयः||(१२)
१ २ ३२उ ३ २ ३ २ ३ २ ३१ २ १ २ ३२ ३ २ ३ २
अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः| अग्मन्नृतस्य योनिमा||(१३)
२३ २३ १ २ ३ १ २ ३१ २र २३ २३ १ २
ओम् तरत्समन्दी धावति धारा सुतस्यान्धसः| तरत्समन्दी धावति||(१४)
३ १ २३१ २ ३१२ ३ १ २ २३ २३ १ २
उस्त्रा वेदवसूनांमर्तस्य देव्यवसः| तरत्समन्दी धावति||(१५)
३ १ २ ३२ ३ २ ३१ २ २३ २३ १ २
ध्वस्त्रयोः पुरुषन्त्योरा सहस्त्राणिदद्महे| तरत्समन्दी धावति||(१६)
१ २र ३ २३ १२ ३१ २ ३ १२ २३ २३ १ २
आययोस्त्रिंशतं तनासहस्त्राणि च दद्महे| तरत्समन्दी धावति||(१७)
२३ २ ३ १ २ ३२ ३२३ १ २ ३२ ३ १२३ १ २ ३२ ३१ २
ओम् एतोन्विन्द्रँस्तवाम शुद्धँशुद्धेन साम्ना|शुद्धैरुक्थैर्वावृध्वासँशुद्धैराशीर्वान्ममत्तु||(१८)
१ २ ३२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २ ३१ २र ३ १ २
इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरुतिभिः| शुद्धोरयिनिं धारयशुद्धो ममद्धिसोम्य||(१९)
१ २३ १ २र ३२ ३ १ २र ३ १ २ ३२ ३१ २ ३ १२र
इन्द्रशुद्धो हि नो रयिँशुद्धोरत्नानिदाशुषे|शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजँसिषाससि||(२०)
१२ ३ २उ ३ १ २३ १२ ३२ ३१ २ ३ २ ३ १ २
ओम् तमु ष्टवाम यं गिर इन्द्रमुक्थानिवावृधुः|पुरूण्यस्यपौँस्यासिषासन्तोवनामहे||(२१)
१ २ ३ १ २र३ १ २र २ ३२उ ३ २
ओम् न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन्| न क्येवं यथा त्वम्||(२२)

३१ २ ३ १२ ३१ २र ३ १२ ३ १ २

ओम् पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः|

१२ ३२उ ३ १ २ ३ २३ १ २र३ १ २र

अतप्ततनूर्न तदामो अश्नुते श्रृतास इद्वहन्तः सं तदाशत||(२३)

१ २३ २३ १२ ३२ ३ १ २ ३ १२ ३क२र

तपोष्पवित्रं विततं दिवस्पदेऽर्चन्तो अस्य तन्तवो व्यस्थिरन्|

१२ ३ १२३ १ २ ३ २ ३१ २र ३ १

अवन्त्यस्य पवितारमाशवो दिवः पृष्ठमधि रोहन्ति तेजसा||(२४)

१२ ३२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २

अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः|

३ १ २ ३ १ २ ३१ २ ३ २३ २ ३१ २

याविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः||(२५)

अथ अरिष्ट वर्गः|

विनियोगः—अबोध्यग्निः प्रजापति स्त्रिष्टबग्न्युषसौ; महित्रिणाइतिद्वयोः पृष्ठवाड्गायत्री प्रजापतिः; त्वावत् इति धुरासाकमश्वो गायत्रीन्द्रः; इंद्रंनरोगौरीविति स्त्रिष्टुबिन्द्रः; सोमःपुनानइति प्रजापतिरुष्णिक् सोमः; ससुन्वेतस्य प्रजापतिरुष्णिक् सोमः; विश्वतोदावन्विति प्रजापतिर्विष्टारपंक्तिरिंद्रः; उदुत्तममिति वरुण गौतमौ त्रिष्टुप्वरुणादित्यौ; अभिमंत्रणे विनियोगः|

१२ ३ २ ३ २३ १ २ ३ १२ ३ १२ ३ २३१ २

—ओम् अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम्|

३ १ २३ २ ३२ ३ १ २३ २ ३ १ २ ३ २ ३ १ २

यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्त्रते नाकमच्छ||

४५र १ २ १२र१विर र १ २ २ र १र र२

—ओम् अबोधिया| ग्नाइस्समिधाजनाऽ२नाम्| प्रताइधेऽ३नूम्| इवायतीमुषासम्|

१ २ २ १ विर१र २ १ २रर १ र २ र१र २१ २ १ २

यह्वाईऽ३वा| प्रवाऽ२यामुज्जिहानाः| प्रभानाऽ२३वाः| सस्त्रतेनाकमच्छ| इडाऽ२३भाऽ३४३|

१

ओऽ२३४५इ| डा||१||

१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ २३ १२

–ओम् महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः| दुराधर्षं वरुणस्य||(२)

३२ ३ ५ १ १ ३२ ३ ५ १

–ओम् महाइत्राऽ२३४इणाम्| अवाऽररस्तू| द्युक्षंमाऽ२३४इत्रा| स्याऽरर्यम्णाः|

३२ ३ ५ २१र ५ ४ ५

दुराधाऽ२३४र्षाम्| वरौहोऽ२३४| वा| णाऽ५स्योऽ६हाइ||२||

५ र र ५ २१ र २१र २ १ १

–ओम् महित्रीणामवरस्तूऽ६ए| द्युक्षंमित्रस्यार्यम्णाः| दुराधाऽ२३४र्षाम्| वरौहोऽ२३४| हिमाऽर|

१ ३ ५र र २र१ २ १ ३

ण| स्योऽ२| याऽ२३४औहोवा| हाओवा| ओवाऽ२३४५||३||

१ २ ३ १२ १ २

–ओम् त्वावतः पुरूवसो वयमिन्द्रः प्रणेतः| स्मसि स्थातर्हरीणाम्||

१र २ ६ २ १ र२ ६ २ २१ २

–ओम् त्वावतोऽ३| हौऽ३होऽ३१इ| पुरूवसोऽ३| हौऽ३होऽ३१इ| वयमिन्द्राऽ३|

६ २ १ र२ ६ २ १ २र ६ २ १ र २

हौऽ३होऽ३१इ| प्रणेतऽ३ः| हौऽ३होऽ३१इ| स्मसिस्थातऽ३ः| हौऽ३होऽ३१इ| हरीणाऽ३म्|

६ २

हौऽ३होऽ३१२३४५इ| डा||४||

२ ३ १ २ ३ १२ ३ १ २र ३१ २३ २ ३ २

–ओम् इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः|

२ ३ १२ ३ १२ ३ २ ३ १ २र ३१ २३ १ २

शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः||

२ ३ ५ २ ३ ५ २१ २ ३ ५

–ओम् इन्द्रन्नाऽ२३४रो| नेमाधाऽ२३४इता| हवन्ताऽ२३इ| यत्पाराऽ२३४याः|

२ ३ ५ २ १ २ ३ ५ २ ३ ५ २ १

यूनाजाऽ२३४ताइ| धियास्ताऽ२३ः| शूरोनाऽ२३४र्षा| ताश्रावाऽ२३४साः| चकामाऽ२३इ|

२ ३ ५ २ ३ ५ १ ६ २ २ १र३ १११

आगोमाऽ२३४ती| व्रजाइभाऽ२३४जा| त्वन्नाऽ३उवाऽ३| एऽ३| आयूऽ२३४५ः||५||

२ ३ २ ३ १ २ ३१ २ ३ १२ ३ २३ १२

—ओम् त्यमू षु वाजिनं देवजूत ँ सहोवानं तरुतार ँ रथानाम्|

१ २ ३ १ २३ २ ३ २३ १ २ ३१ २

अरिष्टनेमिं पृतनाजमाशु ँ स्वस्तये तार्क्ष्यमिहा हुवेम||(२)

५ र २र २ १११ २र र ३ ५ र३र२१ २ २ ३ ४५

—ओम् त्यमूषु| वाजि| नाऽ३४५म्| देवजूताऽ२३४म्| सहोवानंता| रुताऽ३| र ँ रथानाम्|

२ ३ ५ २ २३र ५ २ १ र २ ३ २

अरिष्टनाऽ२३४इमीम्| पृतनाऽ३४३जमाशुम्| स्वस्त| याइ| तार्क्ष्यमिहाऽ३४३|

२ ४

हूऽ३वाऽ५इमाऽ६५६||६||

२र २ र र ४ २३र५ ३ ५४५र३ १११ ५ र३र२१

—ओम् ईयइयाऽ३हाइ| त्यमूषुवाजिनाऽ३न्देऽ३वजूतम्| ईऽ४यइया|हाऽ२३४५इ|सहोवानंता|

२ २ ३ ४५ २र २ १ २ १ २ ३ ४ ५

रुताऽ३| र ँ रथानाम्| ईयइयाऽ३हाइ| अरिष्टऽ३| नाइ| मीऽ३म्पृत| नाजमाशुम्|

३ ५४५र ३ १११ २ १ र २ ३२ २ ४

ईऽ४यइया| हाऽ२३४५इ| स्वस्त| याइ| तार्क्ष्यमिहाऽ३४३| हूऽ३वाऽ५इमाऽ६५६||७||

३ २ ३१ २ ३ २३ २३ १२ ३२३ २३ १ २

—ओम् त्रातारमिन्द्रमवितारमिन्द्र ँ हवेहवे सुहव ँ शूरमिन्द्रम्|

३२उ ३ १ २ ३१ २र३ २ ३२३ १ २ ३ १ २

हुवे नु शक्रं पुरुहूतमिन्द्रमिद ँ हविर्मघवा वेत्विन्द्रः||

२र१र अ २ १ र र अ २ १

—ओम् त्रातारमिन्द्रमविता|रमीऽ२३न्द्राम्| हवेहवेसुहव ँशू|रमीऽ२३न्द्राम्|हुवाइनुशक्रंपुरुहू|

अ २ २१ २ १ र२१ र २ २ ४

तमीऽ२३न्द्राम्| इद ँ स्वस्तिनोमघवा| वाऽ३४३इ| तूऽ३वाऽ५इन्द्राऽ६५६ः||८||

१२ ३२ ३ २उ ३ २ ३ १ २ १२ ३ १ २र ३ १ २

—ओम् सोमः पुनान ऊर्मिणाम्यं वारं वि धावति| अग्रे वाचः पवमानः कनिक्रदत्||

17

३र४५ र २ ३४र ५ ५ १ र २ २ २ ३ ३

—ओम् सोमःपुना|हो|नऊर्मिणाऽ६ए|अव्यंवारंविधाऽ१वाऽ३ती|अग्रेवाऽ२३४५हुवा|चाऽ२३४५ः|

२१ २ १ ३ ५रर २ ३ १११

पवमाऽ२३नाऽ३ः| काऽ२नाऽ२३४औहोवा| क्रददेऽ२३४५||६||

१ २ ३ १ २र३ २ ३ १ २३ १ २र २ ३ १ २ ३ १

—ओम् स सुन्वे यो वसूनां यो रायामानेता य इडानाम्| सोमो यः सुक्षितीनाम्||

४ ५ १र र २ १ १ र र १ २ १ २

—ओम् सासू| न्वेयोवसूऽ२३नाम्| योराऽरयामाऽर| नेतायइडाऽ२३नाम्| सोऽ२३माः|

१ २ १ ५ ५

यःसुक्षिताऽ२३४इनोऽ६हाइ||१०||

१ २ ३ १ २ ३ १ २३ २ ३ १ २३ १२

—ओम् विश्वतोदावन्विश्वतो न आ भर यं त्वा शविष्ठमीमहे||

२ १ २र र १ र २१र २ २ १ र २१र २र २

—ओम्हाउ|(३)वा|विश्वतोदावन्विश्वतोनआभर|हाउ|(३)वा|यन्त्वाशविष्ठमीमहे|हाउ|(३)|वा|

१र २ १र २ १र २ ३ १११

आयुः| हाउ|(३) वा| सूवः| हाउ|(३) वा| ज्योतिः| हाउहाउहाउवाऽ३| ईऽ२३४५||११||

१ २ ३१ २ ३ १ २३ १ २र३१ २र ३१ २

—ओम् उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमँ श्रथाय|

१ २ ३ २ ३१ २र३२ ३ १ २

अथादित्य व्रते वयं तवानागसो अदितये स्याम||

२र १र र २र १ २ १ २ १ र२ १ २

–ओम् हाउ|(३) आयुश्चक्षुर्ज्योतिः| औहोवा| ईया| उदुत्तमंवरुणपाशमाऽ२३स्मात्|
१ र २ १ २ १ र र२१ २
अवाधमंविमध्यमँ श्रथाऽ२३या| अथादित्यव्रतेवयन्ताऽ२३वा|
र१ र र२ १ २ २र १र र २र १ २ १ ३
अनागसोअदितयेसियाऽ२३माऽ३| हाउ|(३) आयुश्चक्षुर्ज्योतिः| औहोवा| ईऽ२|याऽ२३४|
५रर ३
औहोवा| ईऽ२३४५||१२||

## 18

( ब्राह्मणानां पूजनं; अप्रतिरथाद्यरिष्टवर्गादि शांतिं पठेयुः )

– अप्रतिरथसूक्तः|

विनियोगः–आशुःशिशान इत्याद्यध्यायस्य अनादेशे अप्रतिरथऋषिः; अवसृष्टेत्यादि चतुर्णां भरद्वाजः; त्रयोदशर्चामाद्यानीतृष्टुप्; यत्रबाणा इत्यस्याःपंक्तिः; विरक्षोविनइन्द्रेति द्वयोरनुष्टुप्; इन्द्रस्यबाहूमर्माणितेति द्वयोः स्वराट्त्रिष्टुप्; अन्धा अमित्रेत्यस्यानुष्टुप्; योनस्वइति पंक्तिः; मृगोनभद्रंकर्णेति द्वयो स्त्रिष्टुप्; स्वस्तिनइत्यास्याः स्वराट्तुष्टुप्; ग्रमस्तोध्यायस्यानादेश इन्द्रो देवता; बृहस्पतेरित्यस्या बृहस्पतिः; इन्द्रआसांनेताइत्यस्या इन्द्र बृहस्पती; देवसेनामित्यस्यामरुतः; अवसृष्टेत्यस्याइषुः; अमित्रसेनाइत्यस्याअग्निः; यत्रबाणाइत्यस्याः क्रमेण इन्द्र बृहस्पतिरादित्याः; मर्माणितेत्यस्याः क्रमेणसोमवरुणदेवाः; भद्रंस्वस्तिनइत्यनयोर्विश्वेदेवाः; शांत्यर्थे जपे विनियोगः|

३ १ २र ३२उ ३ १ २ ३ १ २र ३ २
–ओम् आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम्|
३ १ २ ३१ २ ३२ ३१ २र ३ १ २र
ऽसङ्क्रन्दनोऽनिमिष एकवीरः शतँ सेना अजयत्साकमिन्द्रः||(१)
३ १ २ ३ १२ ३ १ २ ३ १ २ ३ १२ ३ १ २
सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना|
१ २र ३ १ २ ३ १ २ ३ १२ ३ १ २
तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा||(२)
१ २र ३ १ २ ३ १ २३ १ २र ३ २उ ३ १ २ ३१ २
स इषुहस्तैः स निषङ्गिभिर्वशी सँ स्त्रष्टा स युध इन्द्रो गणेन|
३ १ २ ३ १ २ ३ २ १२ ३ १२ ३१ २

स ँ सृष्टजित्सोमपा बाहुशर्ध्यू३ग्रधन्वा प्रतिहिताभिरस्ता||(३)
१२ ३ १२ ३ १२ ३ १ २र ३ १२
बृहस्पते परि दीया रथेन रक्षोहामित्रा ँ अपबाधमानः|
३ १ २र ३ २ ३ १ २र १ २ ३ १ २र
प्रभन्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्||(४)
३ १ २र३ १२३ १२ ३ १ २र ३२
बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः|
३ १२ ३ १ २ ३ १ २र ३ २३ १ २ ३ २
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित्||(५)

19

३ १ २ ३ २ ३ १२ ३ १२ ३ १ २ ३ २ ३१ २
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा|
३१ २ ३ १ २ ३ १ २ ३ २३ १ २
इम ँ सजाता अनु वीरयध्वमिन्द्र ँ सखायो अनु स ँ रभध्वम्||(६)
३ २ ३ २ ३ १२ ३ १२ ३२ ३ २ ३ १२ ३१ २
अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः|
३ १ २ ३ १ २३ २ २३ १२ ३ २ ३ २
दुश्च्यवनः पृतनाषाडयुध्यो३ऽस्माक ँ सेना अवतु प्र युत्सु||(७)
३ २ ३२उ ३ २३ १२ ३ २ ३१ २३ १ २
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः|
३ १२ ३ १ २र ३१ २ ३ १ २
देवसेनानामभिभन्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्||(८)
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २३ १२ ३ २
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुता ँ शर्ध उग्रम्|
३१ २ ३ २ ३ १ २ ३ २ ३ १ २३ १२
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात्||(९)
१ २ ३ १ २३ १ २र ३ २३ १ २
उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मना ँ सि|
१२ ३ २ ३ १ २ ३ १ २र ३ १२ ३ १ २
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः||(१०)
३ २ ३ २ ३ १२ ३ २३ २ ३ १ २र३ १ २

अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु|
३ १ २ ३ १ २र ३ १ २ ३ १२
अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु||(११)
३ १ २र ३ १२ ३ १ २ ३ १ २ ३ १ २
असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्धमाना|
१ २ ३ २ ३ १२ ३ २३१ २३ २ ३२उ ३ २
तां गूहत तमसापव्रतेन यथैतेषामन्यो अन्यं न जानात्||(१२)



३ १२ ३ १ २ ३ १२ ३ १ २ ३ १२
अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि|
३२उ ३ १२ ३ १ २र३२ ३ २ ३ १२
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम्||(१३)
२३ १ २ ३ १ २ ३ १ २ ३ १ २ ३१ २ ३ १ २र
प्रेता जयता नर इन्द्रो वः शर्म यच्छतु| उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ||(१४)
१ २ ३१ २ ३ १ २३ १ २ २ ३ २ ३१ २ ३ २उ ३ २ ३१ २
अवसृष्टापरा पत शरव्ये ब्रह्मसँ शिते|गच्छामित्रान्प्र पद्यस्व मामीषां
कंचनोच्छिषः३||(१५)
३ १ २ ३ १ २र ३ १ २ ३१ २३ १२ ३ १ २
कड्काः सुपर्णा अनु यन्त्वेनान् गृध्राणामन्नमसावस्तु सेना|
१ २ ३ २ ३ २ ३ १ २ ३१ २३ १ २
मैषां मोच्यघहारश्च नेन्द्र वयाँ स्येनाननुसंयन्तु सर्वान्||(१६)
३ १ २ ३ १ २ ३२ ३२ ३ १ २र ३ १ २ ३ १ २
अमित्रसेनां मघवन्नस्मां छत्रुयतीमभि| उभौ तामिन्द्र वृत्रहन्नग्निश्च दहतं प्रति||(१७)
१ २ ३ २ ३१२ ३ १ २ ३ १ २
यत्र बाणाः संपतन्ति कुमारा विशिखा इव|
१ २ ३ १ २३ २ ३१ २ ३ १२ ३ २ ३१ २
तत्र नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु||(१८)
२र ३ १ २र ३ २ ३ २ ३ १२ २ ३१ २ ३ १२ ३१ २
रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज|वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः||(१९)

१    २ ३ १२        ३ १  २         ३२  २ ३  १  २ ३२ ३ १२      ३  १२
वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः|यो अस्माँअभिदासत्यधरं गमया तमः||(२०)
१ २   ३ १   २र३  १२        ३ १ २  ३ १ २३ २
इन्द्रस्य बाहू स्थविरौ युवानावनाधृष्यौ सुप्रतीकावसह्यौ|
१  २        ३२उ  ३ १ २ ३ १  २ ३ १  २र  ३  १ २ ३२
तौ युन्जीत प्रथमौ योग आगते याम्यां जितमसुराणाँ सहो महत्||(२१)
१ २   ३  १२            ३  १ २  ३  २३ २३१ २
मर्माणि ते वर्मणा च्छादयामि सोमस्त्वा राजामृतेनानु वस्ताम्|
३ १ २र३ १२            ३ १ २ ३  १ २ ३१ २३
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु||(२२)



३ १  २              ३ १ २        १ २   ३ १ २   ३ १ २    ३ १२
अन्धा अमित्रा भवताशीर्षाणोऽहय इव| तेषां वो अग्निनुन्नानामिन्द्रो हन्तु वरंवरम्||(२३)
२  ३  १  २ ३ २ ३  २   ३ १  २
यो नः स्वोऽरणो यश्च निष्ठयो जिघाँ सति|
३ १      २र   ३ २ ३ २३ १  २र३  २३  २३ १  २र
देवास्तँ सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरँ शर्म वर्म ममान्तरम्||(२४)
३२उ   ३ १ २ ३१  २ ३ १  २३ २३ १  २   ३  १२
मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः|
३ २  ३   १ २ ३१ २    ३ १      २र   ३   २र
सृकँ सँ शाय पविमिन्द्र तिग्मं वि शत्रूं ताठि मृधो नुदस्व||(२५)
३ १  २र                ३ १ २   ३१ २
भद्रं कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः|
३ १ २र  ३ १  २ ३ २३क२र    ३ १२३  १२र
स्थिरैरंगैस्तुष्टुवाँ सस्तनूभिर्व्यशेमहि देवहितं यदायुः||(२६)
३ २  ३ १ २  ३१ २    ३  १ २  ३२  ३ १२
ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|
३ २  ३ २ ३  १ २        ३ २ ३ २३१ २            ३ २ ३ २२ १२
स्वस्ति नस्ताक्ष्यौ अरिष्टनेमिःस्वस्तिनोबृहस्पतिर्दधातु|ओम्स्वस्तिनोबृहस्पतिर्दधातु||(२७)
–अथ अरिष्ट वर्गः|

विनियोगः—अबोध्यग्निः प्रजापति स्त्रिष्टबग्न्युषसौ; महित्रिणाइतिद्वयोः पृष्ठवाड्गायत्री प्रजापतिः; त्वावत् इति धुरासाकमश्वो गायत्रीन्द्रः; इंद्रंनरोगौरीविति स्त्रिष्टुबिन्द्रः; सोमःपुनानइति प्रजापतिरुष्णिक् सोमः; ससुन्वेतस्य प्रजापतिरुष्णिक् सोमः; विश्वतोदावन्विति प्रजापतिर्विष्टारपंक्तिरिंद्रः; उदुत्तममिति वरुण गौतमौ त्रिष्टुप्वरुणादित्यौ; अभिमंत्रणे विनियोगः|

१२ ३ २ ३ २३ १ २ ३ १२ ३ १२ ३ २३१ २

—ओम् अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम्|

३ १ २३ २ ३२ ३ १ २३ २ ३ १ २ ३ २ ३ १ २

यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्त्रते नाकमच्छ||



४५र १ २ १२र१विर र १ २ २ र १र र२

—ओम् अबोधिया| ग्नाइस्समिधाजनाऽ२नाम्| प्रताइधेऽ३नूम्| इवायतीमुषासम्|

१ २ २ १ विर१र २ १ २रर १ र २ र१र २१ २ १ २

यह्वाईऽ३वा| प्रवाऽ२यामुज्जिहानाः| प्रभानाऽ२३वाः| सस्त्रतेनाकमच्छ| इडाऽ२३भाऽ३४३|

१

ओऽ२३४५इ| डा||१||

१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ २३ १२

—ओम् महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः| दुराधर्षं वरुणस्य||(२)

३२ ३ ५ १ १ ३२ ३ ५ १

—ओम् महाइत्राऽ२३४इणाम्| अवाऽररस्तू| द्युक्षंमाऽ२३४इत्रा| स्याऽरर्यम्णाः|

३२ ३ ५ २१र ५ ४ ५

दुराधाऽ२३४र्षाम्| वरौहोऽ२३४| वा| णाऽ५स्योऽ६हाइ||२||

५ र र ५ २१ र २१र २ १ १

–ओम् महित्रीणामवरस्तूऽ६ए| द्युक्षंमित्रस्यार्यम्णाः| दुराधाऽ२३४र्षाम्| वरौहोऽ२३४| हिमाऽर|
१ ३ ५र र २र१ २ १ ३
ण| स्योऽ२| याऽ२३४औहोवा| हाओवा| ओवाऽ२३४५||३||
१ २ ३ १२ १ २
–ओम् त्वावतः पुरूवसो वयमिन्द्रः प्रणेतः| स्मसि स्थातर्हरीणाम्||
१र २ ६ २ १ र२ ६ २ २१ २
–ओम् त्वावतोऽ३| हौऽ३होऽ३१इ| पुरूवसोऽ३| हौऽ३होऽ३१इ| वयमिन्द्राऽ३|
६ २ १ र२ ६ २ १ २र ६ २ १ र २
हौऽ३होऽ३१इ| प्रणेतऽ३ः| हौऽ३होऽ३१इ| स्मसिस्थातऽ३ः| हौऽ३होऽ३१इ| हरीणाऽ३म्|
६ २
हौऽ३होऽ३१२३४५इ| डा||४||
२ ३ १ २ ३ १२ ३ १ २र ३१ २३ २ ३ २
–ओम् इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः|
२ ३ १२ ३ १२ ३ २ ३ १ २र ३१ २३ १ २
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः||



२ ३ ५ २ ३ ५ २१ २ ३ ५
–ओम् इन्द्रन्नाऽ२३४रो| नेमाधाऽ२३४इता| हवन्ताऽ२३इ| यत्पाराऽ२३४याः|
२ ३ ५ २ १ २ ३ ५ २ ३ ५ २ १
यूनाजाऽ२३४ताइ| धियास्ताऽ२३ः| शूरोनाऽ२३४र्षा| ताश्रावाऽ२३४साः| चकामाऽ२३इ|
२ ३ ५ २ ३ ५ १ ६ २ २ १र३ १११
आगोमाऽ२३४ती| व्रजाइभाऽ२३४जा| त्वन्नाऽ३उवाऽ३| एऽ३| आयूऽ२३४५ः||५||
२ ३ २ ३ १ २ ३१ २ ३ १२ ३ २३ १२
–ओम् त्यमू षु वाजिनं देवजूतँ सहोवानं तरुतारँ रथानाम्|
१ २ ३ १ २३ २ ३ २३ १ २ ३१ २

अरिष्टनेमिं पृतनाजमाशुँ स्वस्तये तार्क्ष्यमिहा हुवेम||(२)

५ र २र २ १११ २र र ३ ५ र३र२१ २ २ ३ ४५

–ओम् त्यमूषु| वाजि| नाऽ३४५म्| देवजूताऽ२३४म्| सहोवानंता| रुताऽ३| रँ रथानाम्|

२ ३ ५ २ २३र ५ २ १ र २ ३ २

अरिष्टनाऽ२३४इमीम्| पृतनाऽ३४३जमाशुम्| स्वस्त| याइ| तार्क्ष्यमिहाऽ३४३|

२ ४

हूऽ३वाऽ५इमाऽ६५६||६||

२र २ र र ४ २३र५ ३ ५४५र३ १११ ५ र३र२१

–ओम् ईयइयाऽ३हाइ| त्यमूषुवाजिनाऽ३न्देऽ३वजूतम्| ईऽ४यइया|हाऽ२३४५इ|सहोवानंता|

२ २ ३ ४५ २र २ १ २ १ २ ३ ४ ५

रुताऽ३| रँ रथानाम्| ईयइयाऽ३हाइ| अरिष्टऽ३| नाइ| मीऽ३म्पृत| नाजमाशुम्|

३ ५४५र ३ १११ २ १ र २ ३२ २ ४

ईऽ४यइया| हाऽ२३४५इ| स्वस्त| याइ| तार्क्ष्यमिहाऽ३४३| हूऽ३वाऽ५इमाऽ६५६||७||

३ २ ३१ २ ३ २३ २३ १२ ३२३ २३ १ २

–ओम् त्रातारमिन्द्रमवितारमिन्द्रँ हवेहवे सुहवँ शूरमिन्द्रम्|

३२उ ३ १ २ ३१ २र३ २ ३२३ १ २ ३ १ २

हुवे नु शक्रं पुरुहूतमिन्द्रमिदँ हविर्मघवा वेत्विन्द्रः||

24

२र१र अ २ १ र र अ २ १

–ओम् त्रातारमिन्द्रमविता|रमीऽ२३न्द्राम्| हवेहवेसुहवँशू|रमीऽ२३न्द्राम्|हुवाइनुशक्रंपुरुहू|

अ २ २१ २ १ र२१ र २ २ ४

तमीऽ२३न्द्राम्| इदँ स्वस्तिनोमघवा| वाऽ३४३इ| तूऽ३वाऽ५इन्द्राऽ६५६ः||८||

१२ ३२ ३ २उ ३ २ ३ १ २ १२ ३ १ २र ३ १ २

–ओम् सोमः पुनान ऊर्मिणाम्यं वारं वि धावति| अग्रे वाचः पवमानः कनिक्रदत्||

३र४ ५ र२ ३४र ५ ५ १ र २ २ २ ३ ३

–ओम् सोमःपुना|हो|नऊर्मिणाऽ६ए|अव्यंवारंविधाऽ१वाऽ३ती|अग्रेवाऽ२३४५हुवा|चाऽ२३४५ः|

२१ २ १ ३ ५रर २ ३ १११

पवमाऽ२३नाऽ३ः| काऽ२नाऽ२३४औहोवा| क्रददेऽ२३४५||६||

१ २ ३ १ २र३ २ ३ १ २३ १ २र २ ३ १ २ ३ १

–ओम् स सुन्वे यो वसूनां यो रायामानेता य इडानाम्| सोमो यः सुक्षितीनाम्||

४ ५ १र र २ १ १ र र १ २ १ २

–ओम् सासू| न्वेयोवसूऽ२३नाम्| योराऽरयामाऽर| नेतायइडाऽ२३नाम्| सोऽ२३माः|

१ २ १ ५ ५

यःसुक्षिताऽ२३४इनोऽ६हाइ||१०||

१ २ ३ १ २ ३ १ २३ २ ३ १ २३ १२

–ओम् विश्वतोदावन्विश्वतो न आ भर यं त्वा शविष्ठमीमहे||

२ १ २र र १ र २१र २ २ १ र २१र २र २

–ओम्हाउ|(३)वा|विश्वतोदावन्विश्वतोनआभर|हाउ|(३)वा|यन्त्वाशविष्ठमीमहे|हाउ|(३)|वा|

१र २ १र २ १र २ ३ १११

आयुः| हाउ|(३) वा| सूवः| हाउ|(३) वा| ज्योतिः| हाउहाउहाउवाऽ३| ईऽ२३४५||११||

१ २ ३१ २ ३ १ २३ १ २र३१ २र ३१ २

–ओम् उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमँ श्रथाय|

१ २ ३ २ ३१ २र३२ ३ १ २

अथादित्य व्रते वयं तवानागसो अदितये स्याम||



२र १र र २र १ २ १ २ १ र२ १ २

–ओम् हाउ|(३) आयुश्चक्षुर्ज्योतिः| औहोवा| ईया| उदुत्तमंवरुणपाशमाऽ२३स्मात्|

१ र २ १ २ १ र र२१ २

अवाधमंविमध्यमँ श्रथाऽ२३या| अथादित्यव्रतेवयन्ताऽ२३वा|

र१ र र२ १ २ २र १र र २र १ २ १ ३

अनागसोअदितयेसियाऽ२३माऽ३| हाउ|(३) आयुश्चक्षुर्ज्योतिः| औहोवा| ईऽ२|याऽ२३४|

५रर ३

औहोवा| ईऽ२३४५||१२||

( ततः सुवासिन्योभ्यंगपूर्वकं स्नातास्तदानीमेवोदक माहृत्य तेनोदकेन भोजनार्थं पाकं कुर्युः; दशाहमध्ये दश्रपाते दर्शदिन एव सर्वं दशाह संवंधि पिंडोकदानं सर्वं समापनीयं; पित्रोर्मरणे पित्रोरात्रादूर्ध्वं दशाहिकं कर्म सर्वं समापनीयं; नात्रिरात्रादर्वाग्दर्शपाते; अन्येषां मातापितृव्यतिरिक्तानां प्रथमदिन प्रभृति दर्शे सर्वं समापनीयमेव; इति दशमदिन कृत्यं )

|| इति दशाहश्राद्धम् ||



|| अथ पंचकमृतस्य शांतिः ||

( साचएकादशेह्नि एकादशाहकृत्यार्वाक्कर्तव्या; तीर्थे गत्वा स्नात्वा अहते वाससी परिधाय सुपीठे प्राङ्मुख उपविश्य )

– आचम्य प्राणानायन्य|

संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य धनिष्ठादि पंचकमरणसूचित वंशारिष्टनिरासार्थं ( सव्यं ) यथाशक्त्यातछांतिमहं करिष्ये|

–अमुकगोत्रं अमुकप्रवरं सामवेदस्य कौथुमीशाखाध्यायिनं अमुकशर्माणं पंचकमरण जन्यदोष निरासार्थं शांतिकर्मणाहं यक्ष्ये तत्र त्वामहमाचार्यं वृणे| ( एवंत्वामहं ब्रह्माणं वृणे; त्वामहमृत्विजं वृणे इति सर्वान्वृत्वा )
–एतत्ते पाद्यं पादावनेजनं; एष अर्घः; इदमत्रचंदनंपुष्पं| ( स्वपादौ प्रक्षाल्य आचम्य प्राणानायम्य गायत्र्यादिभिमन्त्रैर्जलमभिमन्त्र्यतेनोदकेन ऋत्विक् पूजोपहाराणां पवित्रास्तु; अस्तु|
संकल्पः– अद्येत्यादि–––तिथौ० वृतानां ब्राह्मणानामासनादिभिः पूजनमहं करिष्ये|
– आचार्याय इदं आसनम्| ( ततःश्चंदनादिभिः संपूज्य )
–यथादत्तं गंद्यार्च्चनं वृतेभ्योहं संप्रददे न मम|
– अत्र गंधपुष्पं० इदं वो ज्योतिः; दिपज्योतिः| ( एवं सर्वत्र )
संकल्पः– अस्य वरणश्राद्धस्यार्चन विधेः सर्वं परिपूर्णं| ( आचमनं )
–दास्यमानं तृप्तिपर्यन्तं भोजनं वृतेभ्योहं संप्रदास्ये|
( तूष्णींसुसंप्रोक्षितमित्यादि )( शिवा आपः सन्तु० सौमनस्यमस्तु० अक्षतं चारिष्टं चास्तु० समाचाराद् दीर्घमायुः शान्तिःपुष्टिस्तुष्टिस्चास्तु )

–अस्य वरणश्राद्ध सांगतासिध्यर्थं दास्यमानां दक्षिणां वृतेभ्यो ब्राह्मणेभ्यो अहं दास्ये|

–वरणश्राद्ध कृतस्य विधेः सर्वं परिपूर्णमस्तु| ( फलहस्तः प्रार्थयेत् )

–अस्य यागस्य निष्पत्यै भवंतोभ्यर्चितामया; सुप्रसादं प्रकर्त्तव्यमेतत्कर्म विधानतः|
( इत्युक्ता फलमग्रे निधाय प्रणमेत् )



– अग्निस्थापनं|
संकल्पः– अत्राद्य–––वासरे पंचकमृतस्यशांतिकर्माड्गत्वेन अस्मिन्कुण्डे स्थण्डिले वा पंचभूसंस्कारपूर्वकं अग्निस्थापनं करिष्ये|

–पंचभूसंस्काराः|
१, दर्भैः परिसमुह्य परिसमुह्य परिसमुह्य| ( त्रिभिः कुशैः कुण्डस्य स्थण्डिलस्य वा पश्चिमभागाद् आरभ्य प्रान्चं त्रिवारं संमृज्य )
२, गोम्यादकाभ्यामुपलिप्य उपलिप्य उपलिप्य| ( तथैव गोमयेन त्रिवारं उपलिप्य )
ततो वामहस्तम् अग्निनिधानपर्यन्तं कुण्डे स्थण्डिले वा निधाय|
३, कुशमूलेन उल्लिख्य उल्लिख्य उल्लिख्य| ( दक्षिणहस्तेन कुशमूलेन कुण्डस्य स्थण्डिलस्य वा सार्धांगुलमितां भूमिं दक्षिणतः त्यक्त्वा प्राग्गतां प्रादेशमात्रां लेखाम्; तन्मूललग्नाम् उददिग्गतांद्वितीयां एकविंशत्यंगुलमितां लेखाम् उल्लिख्य; प्रथम रेखायाः उत्तरस्यां सप्तांगुलम् अन्तरं त्यक्त्वा प्रादेशमात्राः तिस्त्रः रेखाः कुर्यात् )
४, अनामिकांगुष्ठेन उद्धृत्य उद्धृत्य उद्धृत्य| ( उल्लेखनक्रमेण प्रान्चं उदन्चं च अनामिकांगुष्ठाभ्यां पांसून् नीत्वा ऐशान्याम् अरत्निमात्रप्रदेशे निक्षिपेत् )
५, उदकेन अभ्युक्ष्य अभ्युक्ष्य अभ्युक्ष्य| ( जलेन ता अभ्युक्ष्य )
अग्निस्थापनपूजनम्| ( आनीतमग्निं कुण्डस्य स्थण्डिलस्य वा अग्नेय्यां दिशि निधाय; ओम् हुं फट् इति मन्त्रेण नैर्ऋत्यां दिशि आमक्रव्यादांशौ परित्यज्य; अग्निपात्रमादाय त्रिर्भ्रामयित्वा योनिमार्गेण नीत्वा आत्माभिमुखमग्निं कुण्डे स्थण्डिले वा स्थापयेत् )
विनियोगः– अग्निंदूतेति मेधातिथिः काण्वः गायत्र्यग्निः स्थापने विनियोगः|
३ २ ३ १ २ ३ १२ ३ १२ ३ २ ३ १ २ ३ १ २
ओम् अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्| अस्य यज्ञस्य सुक्रतुम्||
विनियोगः– अग्निं दूतेति भरद्वाजो गायत्र्यग्निः स्थापने विनियोगः|
५ र २१र र र २ २१र २ १
ओम् अग्निन्दूताम्| वृणीमहाइ| होताराऽ२३म्वी| श्ववेदसाम्| अस्ययाऽ२३ज्ञा| आ|
२ र २ १ २ १ २ १
औऽ३होवा| स्यासुक्रतुम्| इडाऽ२३भाऽ३४३| ओऽ२३४५इ| डा||
ओम् भूर्भुवःस्वः वरदनामानमग्निम् स्थापयामि| ( अग्नयानीतपात्रे साक्षतोदकंनिषिच्य )
विनियोगः– अग्न आयाहीति भरद्वाजो बार्हस्पत्यः गायत्र्यग्निः आवाहने विनियोगः|
२ ३ १ २ ३१२ ३ २ ३ १ २ १ २र ३१ २
ओम् अग्न आयाहि वीतये गृणानो हव्य दातये| निहोता सत्सि बर्हिषि||

विनियोगः– अग्न आयाहीति गौतमो गायत्र्यग्निः आवाहने विनियोगः|
४ ५ ४र५र ४ ४ १ र र २ २ २ २ ३ ५
ओम् अग्न आयाहि| वाऽ५इतयाइ| गृणानोहव्यदाऽ१ताऽ३ये| निहोताऽ२३४सा|

१ २ १ ५ ५
त्सा२३इवाऽ३| हाऽ२३४इषोऽ६हाइ||
ओम् अग्ने वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेति त्रिप्रवरान्वित भूमिर्माता वरुणः पिता मेषध्वज प्राड्मुख मम सम्मुखो वरदो भव| ( इति संपूज्य प्रार्थयेत् )
अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्| सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्||१||
रुद्रतेजः समुद्भूतं द्विमूर्धानं द्विनासिकम्| षण्नेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम्||२||
याम्यभागेचतुर्हस्तं सव्यभागे त्रिहस्तकम्|स्त्रुवं स्त्रुचं च शक्तिं च अक्षमालांचदक्षिणे||३||
तोमरं व्यजनं घृतपात्रं च वामके| बिभ्रतं सप्तभिर्हस्तैः द्विमुखं सप्तजिह्वकम्||४||
दक्षिणे च चतुर्जिह्वंत्रिजिह्वमुत्तरं
मुखम्|कोटिद्वादशमूर्त्याख्यंद्विपन्चाशत्कलायुतम्||५||
स्वाहा स्वधा वषट्कारैरंकितं मेषवाहनम्| रक्तमाल्याम्बरधरं रक्त पद्मासनस्थितम्||६||
त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते| आगच्छ भगवन्नग्ने यज्ञेऽस्मिन् सन्निधो भव||७||
`सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखम्| विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु||८||
ओम् भूर्भुवः स्वः वरदनामाग्नये नमः नमस्करोमि|
संकल्पः– अनेन पंचभूसंस्कार पूर्वकं अग्निस्थापनेन वरदनामाग्निः प्रीयतां न मम|
( नयन्चकरणादिराभ्य निर्वापपर्यन्तं कार्यं कारयेत्; ततः स्थण्डिलादैशान्यां दिशि स्थण्डिलांतरे वस्त्रमास्तीर्य तदुपर्यक्षतैश्चतुरस्त्रं कृत्वा उदक संस्थतया नक्षत्रादि देवतां स्थापयेत्; उदकसंस्थतया पंचकलशान् संस्थाप्य तेषु प्रत्येकमग्न्युत्तारण पूर्वकमूर्तीः सन्यस्य तासु देवानामावाहयेत् )

## –अथ कलशस्थापनम्|

१, विनियोगः– भूमिरिति इन्द्रो यजुश्छन्दः भूम्यादयो देवता भूम्यभिमन्त्रणे विनियोगः|

१र २ १ २ १ २ ५रर २ २र१र ११११

ओम् भूमिः|(३) अन्तरिक्षम्|(३) द्यौः|(२) द्याऽ३४| औहोवा| एऽ३| भूताया२३४५||
२, विनियोगः– आविशन्निति जमदग्निर्भार्गवः गायत्री पवमानः सोमः कलशस्थापने विनियोगः|

३ २ ३१ २ ३२उ ३ १ २३ १ २र २ ३१ २

ओम् आविशन्कलशँ सुतो विश्वा अर्षन्नभि श्रियः| इन्दुरिन्द्राय धीयते||

विनियोगः— आविशन्निति उशना गायत्री सोमः कलशस्थापने विनियोगः|

५र र ५ १ २र १२ १ २ ३न २ १ २
ओम् आविशन्कालाऽ६श ँ सुताः| वाइश्वाअर्षन्| अभाइश्रायाऽ३ः| ओऽ३हाऽ३| ओवा|
३ ५ १ १ ३ ५रर २ र ३ १११११
ओऽ२३४हाइ| इन्दूऽ२३ः| आऽ२इन्द्राऽ२३४औहोवा| यधीयतेऽ२३४५||

३, विनियोगः—समन्यायन्त्युइति गृत्समदः शौनकःत्रिष्टुप् अपांगपातःजलपूरणेविनियोगः|

२३ १ २र ३ १ २३ २३२ ३क२र
ओम् समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति|
२३ २ ३ १ २ ३ १ २३ १ २र३१२ ३ १ २
तमू शुचि ँ शुचयो दीदिवा ँ समपान्नपातमुप यन्त्यापः||

विनियोगः—अपांसमन्यायन्त्युइति गृत्समदः शौनकःत्रिष्टुप्अपांगपातःजलपूरणेविनियोगः|

२र १र २ १ र २ २र१ र २ र र र
ओम् हाउ|(३) ऐरयत्|(३) अपःसमैरयत्|(३) भूतमैरयत्|(३) अपांगर्भोग्निरिडा|
र र र २ र र र १ र २१ २
पांगर्भोग्निरिडा|(२) पृथिव्यागर्भोग्निरिडा|(३) समन्यायन्त्युपयन्तियाऽ२३न्याः|
र १र २ १ २ १ र र र२ १ २
समानमूर्वंनद्यस्पृणाऽ२३न्ती| तमूशुचि ँ शुचयोदीदिवाऽ२३ ँ साम्|
१ र र २ १ २ २र १र २ १ र २ २र१ र २
अपान्नपातमुपयन्तियाऽ२३पाऽ३ः| हाउ|(३) ऐरयत्|(३) अपःसमैरयत्|(३) भूतमैरयत्|(३)
र र र र र र २ र र र २ र र २
अपांगर्भोग्निरिडा|पांगर्भोग्निरिडा|(२)पृथिव्यागर्भोग्निरिडा|(३)पृथिव्यागर्भोग्निरिडाऽ३हाउवा|
२र १ २ १ २र १ २ १ २र १र २१ २ १ २र १र २१र र २र
ए| अग्निःशिशुक्वः| ए| शुक्रःशिशुक्वः| ए| तेजःशक्रस्यशक्वम्| ए| तेजःसप्राःसमीचीः|
२र१र२१ २र१२र१ २र १ र ३ ११११
ए| तेजऊषोनजारः| ए| सुवर्ज्योतीऽ२३४५ः||

४, विनियोगः—त्वमिमा ओषधीरिति गौतमोराहूगणः त्रिष्टुप् सोमः ओषधिप्रक्षेपेविनियोगः|

२ ३ १ २र ३ २ ३ २३ १ २ ३ २

ओम् त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः|

१ २र ३ २ १ २३ १ २र ३ १ २र

त्वमातनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ||

विनियोगः— त्वमिमा ओषधीरिति गौतमोराहूगणः त्रिष्टुप् सोमः ओषधिप्रक्षेपे विनियोगः|

२र ३र २ २र ४ २ १११ ४ २

ओम् हाउ|(३) हौवा|(३) हाह|हौवा|(३) होवाऽ३|(३) होऽ३वाऽ३४५|(२) होऽ३वाऽ३४|

५रर १ र र २र र १ २र १२१र २ १ र

औहोवा| त्वमिमाओषधीःसोमविश्वा| त्वमपोअजनयस्त्वङ्गाः|

र २र १ २ १ र २र१ र२

त्वमातनोरुर्वन्तरिक्षम्| त्वन्ज्योतिषावितमोववर्थ|

२र ३र २ २र ४ २ १११ ४ २

हाउ|(३) हौवा|(३) हाह|हौवा|(३) होवाऽ३|(३) होऽ३वाऽ३४५|(२) होऽ३वाऽ३४|

५रर २र १ २ १ २ १र२ १ र २ १ र२र र १

औहोवा| ए| जनदिवमन्तरिक्षम्पृथिवींविश्वभोजसम्पुरूरूपाअजीजनः| इट्इडाऽ२३४५||

५, विनियोगः—स्योनापृथिवीति मेधातिथिः पर उष्णिक् पृथिवी मृत्तिकाप्रक्षेपे विनियोगः|

ओम् स्योना पृथिवी नो भवानृक्षरा निवेशनी| यच्छानः शर्म सप्रथो देवान् मा भयादिति||

६,विनियोगः—चन्द्रमाअप्सवन्तरेति त्रितःआप्त्यः पंक्तिः विश्वेदेवाः हिरण्यप्रक्षेपेविनियोगः|

३ १ २ ३ २ १ २र३ १ २ ३ २

ओम् चन्द्रमा अप्स्वां॑ऽ३न्तरा सुपर्णो धावते दिवि|
१ २ ३ १ २ ३ १ २ ३ १ २
न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी||

31

विनियोगः—चन्द्रमा अप्स्वन्तरेति त्रितः पंक्तिरिन्द्रः हिरण्यप्रक्षेपे विनियोगः|
२ १ र २ १ २ १र२ २१र र २
ओम् चन्द्रमाआउवा| प्सुवान्तराउवा| सुपर्णोधाउवा| वतेदिवी| नवोहिराउवा|
१ २ १ २ १ २ १र २
ण्यनाइमायाउवा| पदंविन्दाउवा| तिविद्युताः| वित्तम्माआउवा| स्यरोदाऽ२३सा३४३इ|
१
ओऽ२३४५इ| डा||

७,विनियोगः—परिवाजपतिरिति वामदेवो गौतमः गायत्र्यग्निः पन्वरत्नप्रक्षेपे विनियोगः|
२३ १ २ ३२ ३ २३ १ २ २३ १ २ ३१ २
ओम् परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्| दधद्रत्नानि दाशुषे||

विनियोगः—परिवाजपतिरिति वामदेवो गायत्र्यग्निः पन्वरत्नप्रक्षेपे विनियोगः|
४५र ४ ५ २१ २ १ २ र १ अ १
ओम् पर्यौ| होयिवाजा| पतायिःकाऽ१वीऽरः| आग्निर्हव्या| नायक्रमीऽरत्| दधाऽ२३त्|
१ ३ ५रर २ र १३ ११११
रा२त्नाऽ२३४औहोवा| निदाशुषेऽ२३४५||

८,विनियोगः—इदं वसोरिति मेधातिथिः काण्वः प्रियमेधाश्चांगिरसः गायत्री त्रिशोकः काण्वः वस्त्रवेष्टने विनियोगः|
३ १ २ ३२उ ३ २३ १२ ३१२ १ २ ३ १ २
ओम् इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्| अनाभयिन्ररिमा ते||

विनियोगः—इदं वसोरिति गरो गायत्रीन्द्रः वस्त्रवेष्टने विनियोगः|

५ २ १ २ १विर र २१ २ ३ २ ३ २

ओम् इदंवसाउ| सुतमाऽ२३न्धाः| पिबाऽ२सुपू| णमुदाऽ२३राऽ३४म्| अनाऽ३४भयाऽ३इन्|

४ ५ ४ ५

ररोवा| माऽ५तोऽ६हाइ||

६,विनियोगः— अयमूर्जेति प्रजापतिरनुष्टुप् उदुम्बरः पन्चपल्लवनिधाने विनियोगः|

ओम् अयमूर्जावतो वृक्ष ऊर्जीवफलिनी भव| पर्णं वनस्पते नुत्वानुत्वा सूयताँ रयिः||

32

१०,विनियोगः—सघातमिति गोतमो राहूगणः पंक्तिः अग्निः पूर्णपात्रनिधाने विनियोगः|

२ ३ १ २र३ २३ १ २ ३ १ २

ओम् स घा तं वृषणँ रथमधि तिष्ठाति गोविदम्|

१ २र ३ २ ३ १२ ३ १ २ ३ २३क २र ३ १ २

यः पात्रँ हारियोजनं पूर्णमिन्द्राचिकेतंति योजा न्विन्द्र ते हरी||

विनियोगः—सघातमिति लुशः पंक्तिरिन्द्रः पूर्णपात्रनिधाने विनियोगः|

३४र ३ ४५ ३ २ ३र४र५ १ २ र १ २ १र २ १

ओम् सघातंवृषणम्| रथाऽ३४औहोवा| आधितिष्ठा| तिगोवाऽ१इदाऽरम्| यःपात्रँ हा|

अ ३ ५ २र१ २ ३ ५ १र २ २ १ ३ ५रर

रियोऽ२जाऽ२३४नाम्| पूर्णमि| द्रा|चीकेताऽ२३४ती|योजानूऽ३वाऽ३इ|द्राऽ२ताऽ२३४औहोवा|

३ ५

हाऽ२३४री||

विनियोगः—यदाकदेति वज्रो बृहति वरुणः वरुण आवाहने विनियोगः|

३ २३ १२३ १२ ३ १ २ ३ १ २ १ २र ३१२ ३ २३ २३२ ३१२

—ओम् यदाकदाचमीठुषे स्तोता जरेत मर्त्यः|आदिद्वन्देतवरुणंविपागिराधर्त्तारंविव्रतानाम्||

विनियोगः—यदाकदेति वज्रो बृहति वरुणः वरुण आवाहने विनियोगः|

५ र १ ३ ५रर ३ ५ २र१र २र १२ १ २

ओम् यदाकदा| चाऽ२माऽ२३४औहोवा| ठूऽ२३४षे| स्तोताजरेतमर्तियऽ३ः| आदिद्वन्दे|
१ अ ३ २ ३ २ १ २र१ १ ३ ५रर ३ ११११
तावरुणाऽ२३४म्| विपाऽ३४गिरा| धार्त्तारांवी२३| व्राऽ२ताऽ२३४औहोवा| नाऽ२३४५म्||

विनियोगः– वाक्मनः प्राणेति ऋतवोऽनुष्टुप् सूर्यः प्रतिष्ठापने विनियोगः|
१ १ २र१ २र१र२र१र २र १ २ १र२ १२ १२१र २ १र

ओम् वाक्| मनः प्राणः प्राणो पानो व्यानश्चक्षुः श्रोत्रॅ शर्म वर्म भूतिः प्रतिष्ठा||
ओम् एता एव समहाव्रताः सर्वावा एता विराजो दशिनी प्रथमा विॅ शिनी द्वितिया त्रिॅ शिनी तृतीयैषा वै परमाविराड् यच्चत्वारिॅ शद्रात्रयः पंक्तिर्वै परमा विराट् परमायेव विराजि प्रतितिष्ठन्ति|

ओम् वरुणः सांगः सपरिवारः सुप्रतिष्ठितो वरदो भव| ( यथालाभोपचारैः वरुणं संपूज्य्)

संकल्पः– अनेन मत्कृतेन पूजनेन वरुणः सांगः सपरिवारः प्रीयताम्|



## || अथ प्राणप्रतिष्ठापनम् ||

संकल्पः– अद्येत्यादि–––तिथौ० आसां ( अस्य ) मूर्तिनां ( मूर्तेः ) निर्माणविधौ अग्नि प्रतपन ताडन अवघातादि ( अंग प्रत्यंग सन्धि समुत्पन्न टंकाराद्याघातात् तपाग्नि जनित ) दोष परिहारार्थं अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठां करिष्ये|
( अश्वादिस्थानस्थाभिः पंचमृद्भिः–पंचगव्येन प्रक्षालनम् )

मृत्तिकाप्रक्षालनम्|

विनियोगः– स्योनापृथिवीति मेधातिथिः पर उष्णिक् पृथिवी मृत्तिकानप्रक्षालने विनियोगः|

ओम् स्योना पृथिवी नो भवानृक्षरा निवेशनी| यच्छानः शर्म सप्रथो देवान् मा भयादिति||

गोमूत्रप्रक्षालनम्|

विनियोगः–गायत्र्या विश्वामित्रो गायत्री सविता गोमूत्रप्रक्षालने विनियोगः|
२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

–उत्तरांग वैष्णवश्राद्धसिद्धये यथा सपन्नेनान्नेन त्रीन्ब्राह्मणान् भोजनेनाहतर्पयिष्ये; आमान्नानिवा दास्ये|

<u>मुखावलोकनम्</u>|

–जपछिद्रं तपछिद्रं यछिद्रं यज्ञकर्मणि| सर्वं भवतु मे छिद्रं यस्यचेछंति वै द्विजा||
( इति विप्रान् संप्राथयेत् )
–सर्वमछिद्रमस्तु|| ( इति द्विजानां प्रत्युक्तिः )

<u>संकल्पः</u>– इदं कांस्यपात्रं घृतपूरितं छायावेक्षितं सफलं सदक्षिणाकं आचार्याय तुभ्यमहं संप्रददे|

– अद्यपूर्वोच्चरित–––तिथौ० मम ऊर्ध्वदैहिकक्रियाकरण योग्यता जननार्थं कृतस्य प्रायश्चित्तविधेः सर्वपरिपूर्णमस्तु|

* * * * * * * * * * *

|| <u>इति प्रायश्चित्तप्रयोगः</u> ||



|| <u>अथ विष्णुतर्पणम्</u> ||

( तत्रादौ विष्णुतर्पणांग वैष्णवश्राद्धं )
( श्राद्ध असंभवे विष्णुद्देशेन ब्राह्मणान् पूजापूर्वकं भोज्येद् आमान्नं वा दद्यात्; )
<u>संकल्पः</u>–विष्णुतर्पणांगं वैष्णव श्राद्धसिद्धये यथा सपन्नेनान्नेन त्रीन्(यथा)ब्राह्मणान् भोजनेनाहं तर्पयिष्ये; आमान्नानिवा दास्ये|

* * * * * * * * * * *

– वैष्णवश्राद्धप्रयोगः|
( यवानादाय )
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः देवकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
दैवे क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
विष्णो एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|
ओम् भूर्भुवः स्वः समाध्वं; ओम् समास्म्हे|

आचमनं| प्राणायामः|
गायत्रींगायत्रं च पठेत्|
२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२
ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||
१ र १ र र र २१रर २ १ १
ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियोयोनःप्रचोऽ१२१२| हुम्| आऽर|
१ ११११
दायो| आऽ२३४५||
प्रसादं कृत्वा| वैष्णवं श्राद्धं कारयध्वं|
( ऋजुकुशायवप्रक्षेपेण दिग्बन्धः )

105

–अग्निष्वात्ताःपितृगणाःप्राचीं रक्षन्तु मे दिशम्|तथा बर्हिषदः पान्तुयाम्यांयेपितरःस्थिताः|

प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः| ऊर्ध्वतस्त्वर्यमा रक्षेत् कव्यवालनलोप्यधः|

रक्षोभूतपिशाचेभ्यः तथैवासुरदोषतः| सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे|

यवाश्च रक्षन्त्वसुरान् दर्भा रक्षन्तु राक्षसान्| पंक्तिर्वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः|

—श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरं| ताभ्यां चैव नमस्कारं ततः श्राद्धं प्रवर्तते|

सप्तव्याधादशार्णेषु मृगाः कालन्जरे गिरौ| चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे|

तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणावेदपारगाः| प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ|

देवताभ्यः ऋषिभ्यश्च महायोगिभ्य एव च| नमः स्वाहायै स्वाहायै नित्यमेव नमो नमः|(३)

गयायै नमः| गदाधराय नमः|

गयायां देवरूपेण स्वयमेव जनार्दनः| तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्|

—अपवित्रःपवित्रो वा सर्वावस्थां गतोऽपि वा| यः स्मरेत्पुण्डरीकाक्षं सबाह्याभ्यन्तरःशुचिः||

( ततस्ताम्रपात्रे प्रणीतासंज्ञके शुद्धोदकमापूर्य चन्दनपुष्पाक्षतांस्तत्रन्निक्षिप्य कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं संजप्य प्रदक्षिणमालोडयन् )

विनियोगः—एतोन्विन्द्रेति तिसृणां तिरश्च्यनुष्टुबिन्द्रः; तद्विष्णोः परमं पदमिति मेधातिथिः नृचद्गायत्री श्राद्धपाकप्रोक्षणाय जलाभिमंत्रणे विनियोगः|

२३ २ ३ १ २ ३२ ३२३ १ २ ३२ ३ १ २३ १ २ ३२ ३१ २
ओम् एतोन्विन्द्र ँस्तवाम शुद्ध ँशुद्धेन साम्ना| शुद्धैरुक्थैर्वावृध्वास ँशुद्धैराशीर्वान्ममत्तु||
१ २ ३२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २ ३१ २र ३ १ २
इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरुतिभिः| शुद्धोरयिनिं धारय शुद्धो ममद्धि सोम्य||
१ २ ३ १ २र ३ २ ३ १ २र ३ १२ ३ २ ३१ २ ३ १ २र
इन्द्र शुद्धो हि नो रयि ँ शुद्धो रत्नानि दाशुषे|शुद्धोवृत्राणिजिघ्नसेशुद्धोवाज ँसिषाससि||
१ २र ३ २ ३१ २र ३१ २ ३ २ ३२३१ २
तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्||
१ २र ३ १ २ ३२ ३ १ २ २ ३ १ २३२ ३२
तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते| विष्णोर्यत्परमं पदम्||
१२ ३१ २ ३ २३ १ २ ३२ ३ २उ ३ १

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे| पृथिव्या अधिसानवि||(एभिर्मंत्रैर्जलमभिमंत्र्य कुशाग्रगृहितजलेन उपयोगक्रमेण श्राद्धसामग्रीं प्रोक्ष्य )



भवतांप्रसादात्वैष्णवश्राद्धोपहाराणां पवित्रतास्तु; अस्तु|

देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु; अस्तु|

संकल्पः– अद्येत्यादि शुभपुण्यतिथौ0 ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व निवृत्यर्थं विष्णुतर्पणांगं वैष्णवंश्राद्धं संकल्पश्राद्ध् विधिना ( सव्यं ) अहं करिष्ये; कुरुष्व|

आसनदानम्|

भगवते विष्णवे इदमासनं स्वाहा; स्वासनमस्तु|

प्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था  इमेकुशाः|

गंधादिदानम्|

भगवते विष्णवे नमः अत्र० अयं वो गंधः; सुगंधः० यवमाच्छादनं० इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी;सुवाससी० इदं उपवीत; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०

शेषोपचारार्थे यवकुशाः सुकुशाः|

यथादत्तं गंधाद्यर्चनं भगवते विष्णवे स्वाहा–इदं विष्णवे नमम|

अस्य वैष्णवश्राद्धस्यार्चनविधेः सर्वं परिपूर्णं|

अन्नपरिवेषणम्ः|

१, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे यवान् विकीर्य; न्युब्जाभ्यां दक्षिणोत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वाहा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले|| ( विष्णोः हव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )

अन्नसंकल्पः|

इदं अन्नादियद् दत्तं यच्च दास्यमानं(दीयमानंवा) तत्सर्वं तृप्तिपर्यन्तं भोजनं भगवते विष्णवे स्वाहा–इदं विष्णवे नमम|



( तूष्णींसुसंप्रोक्षितमित्यादि )( शिवा आपः सन्तु० सौमनस्यमस्तु० अक्षतं चारिष्टं चास्तु० समाचाराद् दीर्घमायुः शान्तिःपुष्टिस्तुष्टिस्चास्तु )

( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तिपूर्वक पुण्यलोकप्राप्तिः|

( सव्यं ) दक्षिणासंकल्पः|

अस्य वैष्णवश्राद्ध सांगतासिध्यर्थं इमां दक्षिणां मुखवासं च भगवते विष्णवे स्वाहा–इदं विष्णवे नमम|

संकल्पः– अद्यपूर्वोच्चरित०–––शुभपुण्यतिथौ विष्णुतर्पणांग वैष्णवश्राद्ध कृतस्य विधेः सर्वं परिपूर्णमस्तु|

– अनेन वैष्णवश्राद्धेन ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तिः विष्णुतर्पणाख्यकर्म योग्यतावाप्तिः|

*      *      *      *      *      *      *      *      *      *      *      *

– आचमनं; प्राणायामः|

( ततस्ताम्रपात्रे प्रणीतासंज्ञके शुद्धोदकमापूर्य चन्दनपुष्पाक्षतांस्तत्रन्निक्षिप्य कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं संजप्य प्रदक्षिणमालोडयन् )

<u>विनियोगः</u>–एतोन्विन्द्रेति तिसृणां तिरश्च्यनुष्टुबिन्द्रः; तद्विष्णोः परमं पदमिति मेधातिथिः नृचद्गायत्री जलाभिमंत्रणे विनियोगः|

२३ २ ३ १ २ ३२ ३२३ १ २ ३२ ३ १ २३ १ २ ३२ ३१ २

ओम् एतोन्विन्द्र ँस्तवाम शुद्ध ँशुद्धेन साम्ना| शुद्धैरुक्थैर्वावृध्वास ँ्शुद्धैराशीर्वान्ममत्तु||

१ २ ३२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २ ३१ २र ३ १ २

इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरुतिभिः| शुद्धोरयिनिं धारय शुद्धो ममद्धि सोम्य||

१ २ ३ १ २र ३ २ ३ १ २र ३ १२ ३ २ ३१ २ ३ १ २र

इन्द्र शुद्धो हि नो रयि ँ शुद्धो रत्नानि दाशुषे|शुद्धोवृत्राणिजिघ्नसेशुद्धोवाज ँसिषाससि||

१ २र ३ २ ३१ २र ३१ २ ३ २ ३२३१ २

तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्||

१ २र ३ १ २ ३२ ३ १ २ २ ३ १ २३२ ३२

तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते| विष्णोर्यत्परमं पदम्||

१२ ३१ २ ३ २३ १ २ ३२ ३ २उ ३ १

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे| पृथिव्या अधिसानवि||(एभिर्मंत्रैर्जलमभिमंत्र्य कुशाग्रगृहितजलेन उपयोगक्रमेण श्राद्धसामग्रीं प्रोक्ष्य )

108

भवतांप्रसादात्वैष्णवश्राद्धोपहाराणां पवित्रतास्तु; अस्तु|

देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु; अस्तु|

<u>संकल्पः</u>– अद्येत्यादि शुभपुण्यतिथौ0 ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्त्योत्तमलोक प्राप्त्यर्थं विष्णु संहितया अन्यैर्वैष्णवैश्चसामभिः पुराणोक्तश्लोकैः ( सव्यं ) विष्णुतर्पणमहं करिष्ये| ( एवं संकल्पं विधाय विष्णुरूपं प्रेतंस्मरन् दक्षिणाभिमुखो भूत्वा तर्पणं समाचारात् शंखोदकेन कुर्यात् )

( अपसव्यं )

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

–ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले||

५ ५ १ ३ २ ३ ५ १ र २ १ २ १

ओम् इदाऽ६मे| विष्णूऽ२ः| विचक्राऽ२३४माइ| त्राइधानि|दधाइपाऽ१दाऽरम्|समूऽरहोऽ१|

२ १ ३ ५रर २ २

ठाऽ२३माऽ३| स्याऽ२पाऽ२३४औहोवा| एऽ३| सुलेऽ१||

३२ ३ १ २ ३२ ३ २उ ३ २ ३ १ २ ३ १२ ३ १२

–प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा जातवेदसे|

३ १ २ ३१ २र३ २ ३ १२ ३ १२ ३ १२

वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये||

२र १ १ २ २ १ २१ २ र र

हाउ|(३) ऊऽर|(२) ऊऽ२| वाऽ३| हाउवाऽ३| हस्हहस्| अर्चिशोचिस्तपोहरः|

२१ र २ १ र २ १ र र र र२१र २

प्रक्षस्यवृष्णोअरुषस्यनूमाऽ२३हाः| प्रनोवचोविदथाजातवेदाऽ२३साइ|

१र र र २१र २ १र र र२१ २ २र १

वैश्वानरायमतिर्नव्यसेशूऽ२३चीः| सोमइवपवतेचारुरग्नाऽ२३याऽ३इ| हाउ|(३) ऊऽर|(२)

१ २ २ ३ १११

ऊऽ२| वाऽ३| हाउवाऽ३| इऽ२३४५||

109

१ २र३१२ ३ २ ३२ ३ २ ३ १ २

–प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति|

१२ ३ १ २ ३२ ३१ २३ २३क२र३ १२

महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन्||

५र र   १  २१र      २१ र २३ ४ ५ २र१र र  २   १  २ ३ ४ ५ २ १

हाउहाउ| हुप्| प्रकावियाम्| उशने| वब्रुवाणाः| देवोदेवा|नाऽ३न्जनि|माविवक्ती|महिव्रताः|

२  २ ३ ४५ ५र  र  १  २१र   २  १  २     २  ४

शुचिबाऽ३|धुःपवाकाः|हाउहाउ| हुप्| पदावरा|होऽ३अभि|आऽ३४३इ|तीऽ३राऽ५इभाऽ६५६न्||

३१ २  ३  १२     ३ २  ३१ २   १र  २र ३ १ २ ३ १  २   ३    २

सहस्त्रशीर्षाः पुरुषः सहस्त्राक्षः सहस्त्रपात्| स भूमि ँ सर्वतो वृत्वा त्यतिष्ठद्दशा ँ गुलम्||

२१  २     १  र र     २     र१ २१     २

उहुवाहाउ|(३) सहस्त्रशीर्षाःपुरूऽ२३षाः| सहस्त्राक्षःसहस्त्राऽ२३पात्|

१ र    २१र     २  १    २१र    २    १  २    १ ६  २

सभूमि ँ सर्वतोवाऽ२३र्त्वा| अत्यतिष्ठद्दशाड्गुऽ२३लाम्| उहुवाहाउ|(२)उहुवाऽ३हाउ|वाऽ३|

१    १११

इट्इडाऽ२३४५||

३ २ ३२उ ३  १२३  १ २  ३ १२ ३१ २ २ ३ २३क २र       ३२ ३ २

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः| तथा विष्वङव्यक्रामदशनानशने अभि||

२१ र र      १र र  र     २ १र र र र २१    २

उहुवौहोवाऽर|(३) त्रिपादूर्ध्वउदैत्पुरूऽ२३षाः| पादोस्येहाभवत्पूऽ२३नाः|

१ र    २१    २     र  १र   २  १ रर      १ र

तथाविष्वड्वियक्राऽ२३मात्| अशनानशनेआऽ२३भी| उहुवौहोवाऽर|(२) उहुवौ| होऽ२|

३     ५रर   ३    ५  २१ रर       १ र     ३    ५रर

वाऽ२३४| औहोवा| ईऽ२३४डा| उहुवौहोवाऽर|(२) उहुवौ| होऽ२| वाऽ२३४| औहोवा|

३    ५   २१ रर       १ र     ३    ५रर      १११

`सूऽ२३४वाः| उहुवौहोवाऽर|(२) उहुवौ| होऽ२| वाऽ२३४| औहोवा| ऊऽ२३४५||

१२ ३२उ ३ २ ३२उ ३ १ २ १ २ ३ १ २३ १२ ३ १२ ३ १ २ ३ २
पुरुष एवेद ँ सर्वं यद्भूतं यच्च भाव्यम्| पादोऽस्य सर्वाभूतानि त्रिपादस्या मृतं दिवि||
१ र र १ रर २ १ र २१र २ १रर र र २
इयौहोवाऽर|(३) पुरुषएवेद ँ साऽ२३र्वाम्| यद्भूतंयच्चभावाऽ२३याम्|पादोस्यसर्वाभूताऽ२३नी|
१र र २१ २ १ र र १ र ३ ५रर ३ ५
त्रिपादस्यामृतंदाऽ२३वी| इयौहोवाऽर|(२) इयौ| होऽ२| वाऽ२३४| औहोवा| ईऽ२३४डा|
१ र र १ र ३ ५रर ३ ५ १ र र १ र
इयौहोवाऽर|(२) इयौ| होऽ२| वाऽ२३४| औहोवा| ज्योऽ२३४तीः| इयौहोवाऽर|(२) इयौ|
३ ५रर ३ १११
होऽ२| वाऽ२३४| औहोवा| ईऽ२३४५||

१ २ ३२र ३ १ २ ३ १२ ३ १२३ १ २र३१ २र ३ १२
तावानस्य महिमा ततो ज्याया ँ श्च पूरुषः|उतामृतत्वस्येशानोयदन्ने नातिरोहति||
२र १रर २ १ २ २र १ र र र २१र २ २र
हाउ|(३) तावानस्य| महाऽ२३इमाऽ३| हाउ|(३) ततोज्यायाङ्श्चपूरूऽ२३षाऽ३ः| हाउ|(३)
१र र २ २र १ र र २१र २ २र १ १११
उतामृतत्वस्येशाऽ२३नाऽ३ः|हाउ|(३)यदन्नेनातिरोहाऽ२३तीऽ३|हाउ|(३)वाऽ३|इट्इडाऽ२३४५|

१ २ ३ १२ ३२ ३ २ ३ १२ २३ १ २र ३२उ ३ १२ ३२
ततो विराडजायत विराजो अधि पुरुषः| सजातो अत्यरिच्यतपश्चाद्भूमिमथो पुरः||
२ १ र२१र २र १र२र१ २१र २
हाउहाउहाउवा| ततोविराडजायत| हाउहाउहाउवा| विराजोअधिपूरूषः| हाउहाउहाउवा|
१२र१र २ १र र२१ र २१ २ ३ १११
सजातोअत्यरिच्यत| हाउहाउहाउवा| पश्चाद्भूमिमथोपुरः| हाउहाउहाउवाऽ३| ईऽ२३४५||
१ २ ३१ २र ३ २ ३ १३२ १ २ २ ३ १२ ३२
कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||

२र १ २१ २ १ २ १ २ १ २ र १ २

हाउ|(३) अस्मीनस्मिन्|(३) नृम्णाइनृम्णम्|(३) निधाइमाहे|(३)कयानश्चित्रऽ३आभूऽ१वाऽरत्|

र र र १ २ र १ २ २र १ २ १ २

ऊतीसदावृऽ३धाःसाऽ१खाऽर| कयाशचिष्ठऽ३यावाऽ१र्त्ताऽ२३| हाउ|(३) अस्मीनस्मिन्|(३)

१ २ १ २ १ २ १ १ २ ५र र १ र ३ १११

नृम्णाइनृम्णम्|(३)निधाइमाहे|(२) निधाऽ२३इ| माऽ२|हाऽ२३४|औहोवा|सुवर्ज्योतीऽ२३४५ः||

– अनादि निधनो देवः शंखचक्रगदाधर; अक्षय्यः पुंडरीकाक्षः प्रेतमोक्ष प्रदोभव|

अतसी पुष्प संकाशं पीतवाससं अच्युतं; ये नमस्यंति गोविंदं न तेषां विद्यते भयं|

कृष्ण कृष्ण कृपालो त्वं अगतीनां गतिर्भव; संसारार्णवमग्नानां प्रसीद परमेश्वर||

१ २र ३ १ २र ३ १२ २ ३ १ २ ३ १ २ ३ २३ २उ ३ १ २

त्वामिद्धि हवामहे सातौ वाजस्य कारवः| त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः||

२रर र र २ र १रर १ २ ३ ५ १ २ ३र४र५

औहोइत्वामिद्धिहवामहाऽ३ए| सातौवाजा| स्याकाराऽ२३४वाः| तुवाऽ२३४| औहोवा|

२ १ १ २ १ २ ३ ५ १र र २ ३र४र५ १ १ २

वृत्राइषुवाइ| द्रासाऽ३१त्| पतिन्नाऽ२३४राः| त्वांकाष्ठाऽ३४| औहोवा| सूऽर| अर्वाऽ२३४|ताः|

५ ५ १

उहुवाऽ६हाउ| वा| हस्||

३ १ २ ३ १ २ ३ १२ १ २ ३ १ २र ३ २३ १ २ ३ १ २

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः| ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः||

२र र र र १ २र र र र १ २

आभित्वाशूरनोनुमोवा| आदुग्धाइवधेनवईशानमस्यजगतः| सुवाऽ२३र्दशाम्|

१ र२ १ ४ १ र र ५ ५ १

आईशानमाऽ२३इंद्राऽ३| तास्थूऽ२३४षा| ओवाऽ६| हाउवा| अस्||

२३१   २          ३ १ २    ३ १ २

तवाहँ सोम रारण सख्य इन्दो दिवेदिवे|

३१ २    ३  १ २    ३  १  २र  ३२उ    ३  १  २

पुरूणि बभ्रो नि चरन्ति मामव परिधिँ रति ताँ इहि||(२)

112

५ र        २      १              र           १      र १ र    र                 १

–तवाहँसो| मराऽररणा|रण|सख्यइन्दोदिवाऽ2इदिवाइ|दिवे|पुरूणिबभ्रोनिचरन्तिमाऽरमवा|

र                 १          १       ३        ५र र    २       ५

अव| परिधीँ रतिताऽरँ इहाऽ२३इ| आऽ२इ| हाऽ२३४| औहोवा| ऊऽ२३४पा||

४५र    ४ २१    र  र         १ २    २     १ २    २  १

–तवा| तवा| अहँ सोमरारण| सख्याईऽ३न्दो| दिवाऔऽ३हो| दाइवेऽर|

१र      र           २    २    २    १ २  २  १      २ १      ५  ४            ५

पुरूणिबभ्रोनिचरन्तिमाऽ१माऽ३वा| पराऔऽ३हो| धाइँ रतितोऽ२३४वा| आऽ५इहोऽ६हाइ||

१ २           ३  १  २३ १  २३ २  ३ १ २ ३ १  २३ २

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः|

३    १    २र३१    २र       ३१ २       ३  १       २र

जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः||(४)

२र       र      र      १               र     र      र      १

–सोमःपवतेजनितामऽ३ताइनाऽरम्| जनितादिवोजनितापृऽ३थाइव्याऽरः|

१र र          र अ        २       १र      २      १      २

जनिताग्नेर्जनितासू| रियाऽ२३स्या| जनितेन्द्रा| स्याऽ३जनि| तोऽ३४३|

२    ४

ताऽ३वाऽ५इष्णोऽ६५६ः||

३र४ ५  र     र  २      २    ४       १

–सोमःपवतेजनिता| एऽ३| औऽ३होऽ५वा| माताऽ२३४५इनाऽ६५६म्|

२ १र२१र २१र २१र ३ ५ २ र २ ४
जनितादिवोजनितापृथिव्याः| जनाऽ२इताऽ२३४ग्नेः| जनिता| सूऽ३४३|रीऽ३याऽ५स्याऽ६५६|
२ १र २ १र ३ १११
जनितेन्द्रस्यजनितोतविष्णोऽ२३४५ः||

113

५र ४ ५ १ २र१ २ १
–हाउजनत्|(३) जनद्धाउ|(३) होइ| जनत्|(२) होइ| जनात्| सोमःपवा| तेऽ३जनि|
२३ ४ ५ २ १र २ १ २ ३४ ५ २ १र २ १ र २ ३४ ५
तामतीनाम्| जनितादाइ| वोऽ३जनि| तापृथिव्याः| जनिताग्नाइः| जनिता| सूरियस्या|
र ४ ५ १ २ १र २ १
हाउजनत्|(३) जनद्धाउ|(३) होइ| जनत्|(२) होइ| जनात्| जनितेन्द्रा| स्याऽ३जनि|
२ २ ४
तोऽ३४३| ताऽ३वाऽ५इष्णोऽ६५६ः||

४ ५ ४ ५ १ २र१ २ १ २ ३४ ५
–जनद्धाउ|(३) जनदाउ|(३) जनत्| होइ|(३) सोमःपवा| तेऽ३जनि| तामतीनाम्|
२ १र २ १ २३४ ५ २ १र २ १ र २ ३४ ५ ४ ५
जनितादाइ| वोऽ३जनि| तापृथिव्याः| जनिताग्नाइः| जनिता| सूरियस्या| जनद्धाउ|(३)
४ ५ १ २ १र २ १ २ २ ४
जनदाउ|(३) जनत्| होइ|(३) जनितेन्द्रा| स्याऽ३जनि| तोऽ३४३| ताऽ३वाऽ५इष्णोऽ६५६ः||

१र र २ १ २ १ २ १ र र २ १ र र २
*–हाउहोहाइ|(३) अन्तरिक्षँसुवर्द्दिवंजग| न्मा|(३) परात्परमैरय| ता|(२) परात्परमैरय|त|
१र ३र२ र १र २१र२र१रर२१र २र १र र

औहोवाहाउ| वा| ए| यज्ञोदिवो मूर्द्धादेवमादनोघर्म्मोज्योतिः||

१र र २ १ २ १ २ १ र र २ १ र र २
*–हाउहोहाइ|(३) अन्तरिक्ष ँ सुवर्द्दिवंजग| न्मा|(३) परात्परमैरय| ता|(२)परात्परमैरय|त|
१र ३र२ र १ २ १रर २ १र २ १रर२१ र२र र १र र
औहोवाहाउ| वा|ए|पृथिव्यन्तरिक्षन्द्यौरापःकनिक्रदात्सिन्धुरापोमरुतोमादयन्तांघर्म्मोज्योतिः||

114

१र र २ १ २ १ २ १ र र २ १
*–हाउहोहाइ|(३) अन्तरिक्ष ँ सुवर्द्दिवंजग| न्मा|(३) परात्परमैरय| ता|(३)
२१र र र र२ १ २ ५ १ र२ १र र र२ १ २
दिवोमूर्द्धान ँ समैरयन्| होयेऽ३| होऽ२३४वा| यशोघर्म्मीज्योतिः| यशःसमैरयन्| होयेऽ३|
५ १रर २१र र २ र र२ १ २ ५ १ २ १र र
होऽ२३४वा| तेजोघर्म्मीज्योतिः| तेजःसमैरयन्| होयेऽ३| होऽ२३४वा| सुवर्घर्म्मीज्योतिः|
र२ १ २ ५ १र २ १र र र र२ १ २
सुवःसमैरयन्| होयेऽ३| होऽ२३४वा| ज्योतिर्घर्म्मीज्योतिः| ज्योतिःसमैरयन्| होयेऽ३|
२ १ २ १र र
होऽ२३४५वाऽ६५६| घर्म्मीघर्म्मीज्योतिः||
१र र २ १ २ १ २ १ र र २ १ र र २
*–हाउहोहाइ|(३) अन्तरिक्ष ँ सुवर्द्दिवंजग| न्मा|(३) परात्परमैरय| ता|(२)परात्परमैरय|त|
१र ३र२ र १ र२ १ २ र १२ १र र२ र १ र२ १र २ र
औहोवाहाउ| वा|ए| इडांयच्छहस्कृतिंयच्छ| ए| मनओजोयच्छ| ए| मनोमहिमानंयच्छ| ए|
१ २ र १र र२ र १र २ र१ २ १२ र १ र २
यशःस्त्विषिंयच्छ|ए| प्रजांवर्चोयच्छ| ए| पशून्विशंयच्छ| ए|ब्रह्मक्षत्रंयच्छ|ए|स्वर्ज्योतिर्यच्छ||

१र र २ १ २ १ २ १ र र २ १

*–हाउहोहाइ|(३) अन्तरिक्ष ँ सुवर्द्दिवंजग| न्मा|(३) परात्परमैरय| ता|(३)

२ र र र१ २ १ २ र र १ २ र र१ २

यज्जायथाअपूर्वाया| मघवन्वृत्रहत्याया| तत्पृथिवीमप्राथायाः| तदस्तभ्नाउतोदाइवाम्|

१र र २ १ २ १ २ १ र र २ १

हाउहोहाइ|(३) अन्तरिक्ष ँ सुवर्द्दिवंजग| न्मा|(३) परात्परमैरय| ता|(३)

र १र र२१ २ र २ र१ २ रर१ र२र १र २ र १ २ १ २र १ १११

ए| तेजोघर्मःसंक्रीडन्तेशिशुमतीर्वायुगोपास्तेजस्वतीर्म्मरुद्भिर्भुवनानिचक्रदुः| इट्इडाऽ२३४५|

३ १११

ईऽ२३४५||

115

१र र र र १ र र २ १र र३र२

*–हाउहोवा|(३) परात्परमैरय| ता|(२) परात्परमैरय| त|(३) औहोवाहाउ| वा|

१ र२र१ र र२र१ र २र१ २ १ २ र१ र२र१ र१

इन्द्रोधेनुः|(३) आपोधेनुः|(३) भूमिर्धेनुः|(३) अन्तरिक्षन्धेनु|(३) द्यौर्धेनुः|(३) परन्धेनु|(३)

२१२र१ २१ २र१ २र१ र२र१ २र१ र २र१

व्रतन्धेनु|(३) सत्यन्धेनु|(३) ऋतंधेनु|(३) इडाधेनुः|(३) स्वर्धेनुः|(३) ज्योतिर्धेनुः|(३)||

१र र र र २ १ २ १र २र १र २ १र २ १ २३ ५

*–हाउहोवा|(३) परात्परमैरय| ता|(३)यज्जायथाः| अपूर्विया| अपूर्वियाऽ३| आपूर्वाऽ२३४या|

१ २ १ र २ १ र २ १ २ ३ ५ १ २१र २ १ २

मघवन्वृ| त्रहत्याया| त्रहत्यायाऽ३| त्राहत्याऽ२३४या| तत्पृथिवीम्| अप्राथयाः| अप्राथयाऽ३ः|

१ २ ३ ५ १ २ र १र २ १र २ १ २ ३ ५

आप्राथाऽ२३४याः| तदस्तभ्नाः| उतोदिवाम्| उतोदिवाऽ३म्| उतोदाऽ२३४इवाम्|

१र र र र २ १ र र २ १र ३र२

हाउहोवा|(३) परात्परमैरय|ता|(३) परात्परमैरय| त| औहोवाहाउ| वा|
र १र र२ १ र २ रर १ र२र१र २ र १ २१ २र
ए| तेजोघर्मःसंक्रीडन्तेवायुगोपास्तेजस्वतीर्मरुद्भिर्भुवनानिचक्रदुः||
१ २ १ २ २
*–हाऽरऊवाक्|(३) होवा|(२) होवाऽ३| हाउवा|
र र १२१र र२र१ २ १र२१ र२ १ २ १ ३ १११
ए| तोकंप्रजाड्गर्भोनोयमदध्मह्याचपराचपथिभिश्ररन्ताऽ२३४५ः||
१ २ १ २ १ २र१र र२ १र २र १
*–हाऽरऊवाक्|(३) होवा|(३) अयँ सशिड्तेऽ३| होइ| यस्माद्यावापृथिवीभुवनानिचक्रदुः|
२१ २ १ २र१र २१र २ र २र १ २१ २
होइ| अयँ सशिड्तेऽ३| होइ| यस्मादापओषधयोभुवनानिचक्रदुः| होइ| अयँसशिड्तेऽ३|
१ र २ १ र २र १ २१ २ १
होइ| यस्मात्समुद्रियाभुवनानिचक्रदुः| होइ| अयँ सशिड्तेऽ३| होइ|
२र १ र२र१र २र १ १ २ १ २ २
यस्माद्विश्वाभूताभुवनानिचक्रदुः| होइ| हाऽरऊवाक्|(३) होवा|(२) होवाऽ३| हाउवा|
र १ २ १ ३ १११
ए| आपः|(२) आपाऽ२३४५ः||
१ २ र ३२र१ र ३२र१ र र
*–हाऽरऊवाक्|(३)होवा|(३) येभिर्विया|श्वमैरायाऽरः| तेभिर्विया|श्नुहीमादाऽरम्|येभिर्भूताम्|
३२ १ १र२ १र२१र२ १र र १ २१र २ २ र १र
सहस्साहाऽरः| तेभिस्तेजआपः| आपाऽर| येभिर्व्यन्तरिक्षमैरयाऽ३ः| हाउवा| ए| आपः|(२)
१ ३ १११
आपाऽ२३४५ः||
१ २ १ र र १ १ १
*–हाऽरऊवाक्|(३) होवा|(३) यज्जायथाअपूहोऽर| र्वायाऽर| मघवन्वृत्रहाहोऽर| त्यायाऽर|

१ र १ १ र १

तत्पृथिवीमप्राहोऽर| थायाऽरः| तदस्तभ्नाउतोहोऽरइ| दाइवाऽरम्|

१ २ १ २ २

हाऽरऊवाक्|(३) होवा|(२) होवाऽ३| हाउवा|

र १र र२१ २ र २ र१ २ रर१ र२र १र २ र १ २ १ २र १११११

ए| तेजोघर्मःसंक्रीडन्तेशिशुमतीर्वायुगोपास्तेजस्वतीर्म्मरुद्भिर्भुवनानिचक्रदूऽ२३४५ः||

१ २ ३ १ २३ १ २३ २ ३ १ २ ३ १ २३ २

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः|

३ १ २र३१ २र ३१ २ ३ १ २र

जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः||

116

२र र र १ र र र १

–सोमःपवतेजनितामऽ३ताइनाऽरम्| जनितादिवोजनितापृऽ३थाइव्याऽरः|

१र र र अ २ १र २ १ २

जनिताग्नेर्जनितासू| रियाऽ२३स्या| जनितेन्द्रा| स्याऽ३जनि| तोऽ३४३|

२ ४

ताऽ३वाऽ५इष्णोऽ६५६ः||

२३१ २ ३ १ २ ३ १ २

तवाह ँ सोम रारण सख्य इन्दो दिवेदिवे|

३१ २ ३ १ २ ३ १ २र ३२उ ३ १ २

पुरूणि बभ्रो नि चरन्ति मामव परिधि ँ रति ता ँ इहि||

५ र २ १ र १ र१ र र १

–तवाह ँसो| मराऽररणा|रण|सख्यइन्दोदिवाऽरइदिवाइ|दिवे|पुरूणिबभ्रोनिचरन्तिमाऽरमवा|

र १ १ ३ ५र र २ ५

अव| परिधी ँ रतिताऽर ँ इहाऽ२३इ| आऽ२इ| हाऽ२३४| औहोवा| ऊऽ२३४पा||

२ ३ १२३ १२ ३ २३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २३ १२

सोम ँ राजानं वरुणमग्निमन्वारभामहे| आदित्यं विष्णु ँ सूर्यं ब्रह्माणं च बृहस्पतिम्||

४र५ ४र५र ४५ ४ २ १ र २र १ २ २ र १ २ १र

ओम् सोम ँ राजानंवरुणाम्| अग्निमन्वारभामहेऽ३| होवाऽ३हाइ| आदित्यंविष्णु ँ सूर्यम्|

१ २ २ १र २ १ २ २ १ ६ २ ३ ५

होवाऽ३हाइ| ब्रह्माणाऽ२३न्चाऽ३| होवाऽ३हाइ| बृहाऽ३उवाऽ३| पाऽ२३४तीम्||

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

—ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले||

१ २ ३ १ २र ३ १ २ ३ १ २र २ ३ १२ ३ १२

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः| अतो धर्माणि धारयन्||

२ ३ १२ ३ १ २ ३ १२ ३२ १२ ३ २ ३ १ २

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे| इन्द्रस्य युज्यःसखा||

117

२ र र १ २ ३ ५ २र१ ५ १ र२ ३र४र५

ओम् इदंविष्णाऔहोहाइ| वाइचक्राऽ२३४माइ| त्रेधानाऽ२३४इहाइ| दधेपाऽ३४| औहोवा|

१ ३ ५ २ ३ ५ २१र२ १ अ र २ ३र४र५ १ ३ ५

इहाऽ२३४हाइ| उहुवाऽ२३४दाम्| समूठम्| आस्यपा ँ सूऽ३४| औहोवा| इहाऽ२३४हाइ|

३र२ ५र ५ २र र र१ २ ३ ५

औहोऽ३१२३४| लाइ| एहियाऽ६हा|| त्रीणिपदाऔहोहाइ| वाइचक्राऽ२३४माइ|

२ १ ५ १र र २ ३र४र५ १ ३ ५ २ ३ ५ २१र२

विष्णूर्गोऽ२३४हा| पाअदाभाऽ३४| औहोवा| इहाऽ२३४हाइ| उहुवाऽ२३४याः| अतोध|

१ अ र२ ३र४र५ १ ३ ५ ३र२ ५र ५

र्माणिधाराऽ३४| औहोवा| इहाऽ२३४हाइ| औहोऽ३१२३४| यान्| एहियाऽ६हा||

२ र र र १२ ३ ५ २१ ५ १र २ ३र४र५

विष्णोःकर्माऔहोहाइ| णाइपश्याऽ२३४ता| यतोव्राऽ२३४हा| तानिपस्पाऽ३४| औहोवा|

१ ३ ५ २ ३ ५ २१ २ १अ २ ३र४र५ १ ३ ५

इहाऽ२३४हाइ| उहुवाऽ२३४शाइ| इन्द्रस्य| यूजियस्साऽ३४| औहोवा| इहाऽ२३४हाइ|

३र२ ५र ५ ४

औहोऽ३१२३४| खा| एहियाऽ६हा| होऽ५इ| डा||

१ २र ३२ ३ २ ३ १ २र३१ २ ३ १ २

किमित्ते विष्णो परिचक्षि नाम प्रयद्ववक्षे शिपिविष्टो अस्मि|

१ २र ३ १ २र ३२र१३ १२ ३ २ ३१ २

मावर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ||

१ २र३ १ २ ३२ ३१ २ ३१ २ ३२

प्रतत्ते अद्य शिपिविष्ट हव्यमर्यः श ँ सामि वयुनानि विद्वान्|

१ २ ३२ ३१२ ३ १ २ ३ १ २र ३ २

तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके||

१२ ३ १ २2 ३ १ २ ३ २

वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्|

१ २ ३ २३ १ २ ३ १ २ ३ २ ३ १ २

वर्धंतु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः||(२)

118

५ ३र२ ४र ५ १ र र र १ र २

–किमित्| तेवाऽ३इ| ष्णोपरिचा| क्षिनामप्रयद्ववक्षेशिपिविष्टोअस्माऽ२३इ| मावर्पोआऽ३१२३|

४ र र १ २ ४र ५ ४ ५ ५ ३र२

स्मदपगूहएतद्याऽ५दन्या| रूपस्समाऽ३१२३इ| थेबोवा| भूऽ५थोऽ६हाइ|| प्रतत्| तेआऽ३|

४ ५ १ र र १ र २

द्यशिपिवाइ| ष्टहव्यमर्यश्श ँ सामिवयुनानिविद्वाऽ२३न्| तान्त्वागृणाऽ३१२३|

४ र १ २ ४ ५ ४ ५ ५ ३र२

मितवसमतव्यान्क्षाऽ५यन्ताम्| आस्यरजाऽ३१२३| सःपोवा| राऽ५कोऽ६हाइ|| वषट्| तेवाऽ३इ|
४ र ५ १ र र १ २
ष्णवासआ| कृणोमितन्मेजुषस्वशिपिविष्टहव्याऽ२३म्| वार्धन्तुत्वाऽ३१२३|
४ र रर १ २ ४ ५ ४ ५
सुष्टुतयोगिरोमेयूऽ५यंपा| तासुवस्ताऽ३१२३इ| भिस्सोवा| दाऽ५नोऽ६हाइ||
२र र र र २ १ र र २ ३ ५ १र२
—औहोइकिमित्तेविष्णोपरिचाऽ३ए| क्षिनामप्रयद्ववक्षेशिपाइ| वाइष्टोआऽ२३४स्मी| मावाऽ३४|
३र४र५ २र १ २ र ३ ५ २र१ २ ३र४र५
औहोवा| पोआस्मदा| पगूहाऽ३१ः| एतद्यदाऽ२३४न्या| रूपस्समाऽ३४| औहोवा|
१ ५ ५ २रर २
थाऽरइवाभूऽ२३४| था| उहुवाऽ६हाउ| वा|| औहोइथप्राऽ३ए|
१ र र २ ३ ५ १र २ ३र४र५
द्यशिपिविष्टहव्यमर्यश्श ँ सामिवयू| नानाइवाऽ२३४इद्वान्| तन्त्वाऽ३४| औहोवा|
२ १ २ र ३ ५ २ १ २ ३र४र५ १
गृणामिता| वसामाऽ३१| तव्यान्क्षयाऽ२३४न्ताम्| अस्यरजाऽ३४| औहोवा| साऽरःपाराऽ२३४|
५ ५ २रर र २ १ र र र र
काइ| उहुवाऽ६हाउ| वा|| औहोइकेवाऽ३ए| षट्तेविष्णवासआकृणोमितन्मेजुषस्वशिपाइ|
२ ३ ५ १२ ३र४र५ २ १ २ र रर ३ ५
वाइष्टाहाऽ२३४व्याम्| वर्द्धाऽ३४| औहोवा| तुत्वासुष्टू| तायाऽ३१ः| गिरोमेयूयाऽ२३४म्पा|
२ १ २ ३र४र५ १ १ ५ ५ १
तसुवस्ताऽ३४| औहोवा| भाऽरइस्सा| भाऽरइस्सदाऽ२३४| नाः| उहुवाऽ६हाउ| वा| हस्||

119

३२उ ३१ २ ३ १ २र ३२ १२ ३ २
ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्|समूठमस्य पा ँसुले||
१ २ ३१ २र ३ १ २ ३ १ २र २ ३१२ ३ १२

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः| अतोधर्माणिधारयन्||
२ ३ १२ ३ १ २ ३ १२ ३२ १२ ३ २ ३ १ २
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे| इन्द्रस्य युज्यःसखा||
१ २र ३२ ३१ २र ३ १२ ३ २३ २३१ २
तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्||
१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२३२
तद्विप्रासो विपन्युवो जागृवाँ सः समिन्धते|विष्णोर्यत्परमंपदम्||
१२ ३१ २ ३ २३ १ २ ३२ ३ २उ३ १ २
अतो देवा अवन्तु नोयतोविष्णुर्विचक्रमे|पृथिव्याअधिसानवि||

( सव्यं )( तूष्णींसुसंप्रोक्षितमित्यादि )
( शिवा आपः सन्तु० सौमनस्यमस्तु० अक्षतं चारिष्टं चास्तु० समाचाराद् दीर्घमायुः शान्तिःपुष्टिस्तुष्टिस्चास्तु )
–कृतस्य विष्णुतर्पण सांगतासिध्यर्थं गां तत् प्रतिनिधिभूतंद्रव्यंवा विष्णुप्रीतये कस्मैचिद् ब्राह्मणाय अहं दास्ये|

संकल्पः– अद्यपूर्वोच्चरित०–––शुभपुण्यतिथौ ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्त्यर्थं विष्णुतर्पण कृतस्य विधेः सर्वं परिपूर्णमस्तु|

–( सव्यं ) अनेन विष्णुतर्पणकृतेन ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तिः; विष्णुलोकप्राप्तिः उत्तरकर्म योग्यतावाप्तिः|

|| इति विष्णुतर्पणम् ||



## || अथ ब्रहमादिपंचदेवतानां पूजनम् ||

– आचमनं; प्राणायामः|
संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तिपूर्वक अक्षय्य स्वर्गलोक प्राप्त्यर्थं तथा च चतुःषष्टिदुर्मरणान्तर्गत किंचित् दुर्मरणजनित दोष परिहारार्थं नारायण बलि कर्म अहं करिष्ये|
( सव्यं )
संकल्पः– तदंगतया विहितं पंचकलशं स्थापनं ब्रहमादिपंचदेवता स्थापन प्रतिष्ठा पूजनं च करिष्ये|
संकल्पः– तत्रादौ ब्रह्ममादिसूक्त जापकानां वरणमहं करिष्ये|
–अमुकगोत्रं अमुकप्रवरं सामवेदस्य कौथुमीशाखाध्यायिनं अमुकशर्माणं अस्मिन् श्राद्धकर्मणि ब्रह्मसूक्तजपार्थं त्वामहं वृणे| ( एवं अन्यसूक्तजपार्थं त्वामहं वृणे; इति सर्वान्वृत्वा )
–एतत्ते पाद्यं पादावनेजनं;एष अर्घः; इदमत्रचंदनंपुष्पं|(स्वपादौप्रक्षाल्यआचम्यप्राणानायम्य गायत्र्यादिभिमन्त्रैर्जलमभिमन्त्र्यतेनोदकेनऋत्विक्पूजोपहाराणांपवित्रास्तु;अस्तु|
संकल्पः– अद्येत्यादि–––तिथौ० वृतानां ब्राह्मणानामासनादिभिः पूजनमहं करिष्ये|
– वृतेभ्यो ब्राह्मणेभ्यो इदं आसनम्| ( ततःश्चंदनादिभिः संपूज्य )
–यथादत्तं गंद्यार्च्चनं वृतेभ्योहं संप्रददे न मम|
– अत्र गंधपुष्पं० इदं वो ज्योतिः; दिपज्योतिः| ( एवं सर्वत्र )
संकल्पः– अस्य वरणश्राद्धस्यार्चन विधेः सर्वं परिपूर्णं| ( आचमनं )
–दास्यमानं तृप्तिपर्यन्तं भोजनं वृतेभ्योहं संप्रदास्ये|
( तूष्णींसुसंप्रोक्षितमित्यादि )( शिवा आपः सन्तु० सौमनस्यमस्तु० अक्षतं चारिष्टं चास्तु० समाचाराद् दीर्घमायुः शान्तिःपुष्टिस्तुष्टिस्चास्तु )

–अस्य वरणश्राद्ध सांगतासिध्यर्थं दास्यमानां दक्षिणां वृतेभ्यो ब्राह्मणेभ्यो अहं दास्ये|

–वरणश्राद्ध कृतस्य विधेः सर्वं परिपूर्णमस्तु| ( फलहस्तः प्रार्थयेत् )

–अस्य यागस्य निष्पत्यै भवंतोभ्यर्चितामया; सुप्रसादं प्रकर्त्तव्यमेतत्कर्म विधानतः|
( इत्युक्ता फलमग्रे निधाय प्रणमेत् )
( ततो यवपुंजेषु व्रीहीपुंजेषु यथाविधिना पंचकलशान्संस्थाप्य तेषु सर्वौषधि दूर्वा पल्लव सप्तमृतिका फल सुवर्णादी निक्षिप्य वस्त्रेणावेष्टय पूर्णपात्रेण प्रत्येकं क्रमेण यवव्रीहीमुद्गमाषतिल पूरितेनपिधाय तदुपरिक्रमेण रजतसुवर्णताम्रलोहकांस्यमयः प्रतिमाः सन्यस्यतासुक्रमेण ब्रह्मविष्णुरुद्रयमतत्पुरुषान् स्वस्वमंत्रेणावाहयेत् )

(१)विनियोगः—ब्रह्मजज्ञानमिति ब्रह्म त्रिष्टुप् ब्रह्मा आवाहने विनियोगः|
१ २ ३ १ २३ २३ २ ३ १ २३ २ ३ १ २ ३१ २
ओम् ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः|
२ ३क२र ३१ २ ३ २ ३२ ३ २ ३१२ ३ १ २
`स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः||
विनियोगः—ब्रह्मजज्ञानमिति ऋतुस्त्रिष्टुब् ब्रह्मा आवाहने विनियोगः|
१ २ र १ २ १ २ र र१ २
ओम् ब्रह्मा| ब्राऽ२३ह्मा| जज्ञानंप्रथमंपुरास्तात्| विसाइ| वाऽ२३इसी| मतःसुरुचोवेनआवः|
१ २ र र १ २ १ २ र १ २
सबू| साऽ२३बू| ध्नियाउपमाअस्यवाइष्ठाः| सताः| साऽ२३ताः|चयोनिमसतश्चवाइवाऽ३४३ः|
१
ओऽ२३४५इ| डा||
—ओम् ब्रह्मणे नमः—ब्रह्माणम् आवाहयामि स्थापयामि|
(२)विनियोगः—इदं विष्णुरिति मेधातिथिर्गायत्री विष्णुः आवाहने विनियोगः|
३२उ ३१ २ ३ १ २र ३२ १२ ३ २
ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले||
विनियोगः—इदं विष्णुरिति विष्णुर्गायत्री विष्णुः आवाहने विनियोगः|
५ ५ १ ३ २ ३ ५ १ र २ १ २ १
ओम् इदाऽ६मे| विष्णूऽ२ः| विचक्राऽ२३४माइ| त्राइधानि| दधाइपाऽ१दाऽरम्|समूऽरहोऽ१|
२ १ ३ ५रर २ २
ठाऽ२३माऽ३| स्याऽ२पाऽ२३४औहोवा| एऽ३| सुलेऽ१||
—ओम् विष्णवे नमः—विष्णुम् आवाहयामि स्थापयामि|
(३)विनियोगः— आवोराजेति वामदेव स्त्रिष्टुप् रुद्रः आवाहने विनियोगः|
२ ३ १ २ ३१ २ ३ १ २र ३ २ ३ १ २
ओम् आ वो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः|
३ २ ३१ २ ३ २ ३२ ३ १ ३१२

अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्||

122

(३)विनियोगः– आवोराजेति वामदेव स्त्रिष्टुप् रुद्रः आवाहने विनियोगः|

४र५रर४ ३२ ३ २ ३ ४ ५ १ २र १ २ २३ ४ ५ २ १

ओम् आवोराजा| नमध्व| रस्यरुद्राम्| हो|ता| राम्| स| त्ययजाऽ३म्| रोदसीयोः|अग्निंपु|

२ ३ २ ३ ४ ५ १ २ १ २ १ २ २ ४

रा| तनयि| त्नोरचित्तात्| हिरण्य| रू| पाऽ३मव| साऽ३४३इ| काऽ३र्णूऽ५ध्वाऽ६५६म्||

–ओम् रुद्राय नमः–रुद्रम् आवाहयामि स्थापयामि|

(४) विनियोगः–नाकेसुपर्णेति वेनस्त्रिष्टुप् यमः आवाहने विनियोगः|

१ २ ३२उ ३ १ २र ३ १ २र ३ १ २

ओम् नाके सुपर्णमुप यत्पतन्त ँ हृदा वेनन्तो अभ्यचक्षत त्वा|

१ २ ३ १२ ३ २ ३२ ३ १ २ ३ १ २३ २

हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्||

विनियोगः–नाकेसुपर्णेति यमस्त्रिष्टुप् यमः आवाहने विनियोगः|

१ ३२र१ ६ २ १रर ३२ १

ओम् आऽरयाम्| अयायम्| औऽ३होऽ३इ| आऽरइ| ऊऽर| नाकेसुपार्णमुपयात्पतन्ताम्|

३२ १ ६ २ १ ३२र१ ६ २

पतन्तम्| औऽ३होऽ३इ| आऽरइ| ऊऽर| आऽरयाम्| अयायम्| औऽ३होऽ३इ| आऽरइ| ऊऽर|

१ रर र ३ २ १ ३ २ ६ ६ २ १ ३२र१

हृदावेनान्तोअभ्यचाक्षतत्त्वा| क्षतत्वौऽ३| औऽ३होऽ३इ| आऽरइ| ऊऽर| आऽरयाम्|अयायम्|

६ २ १ ३२र१ ३२र१ ६ २

औऽ३होऽ३इ| आऽरइ| ऊऽर| हिरण्यपाक्षंवरुणास्यदूताम्| स्यदूतम्| औऽ३होऽ३इ| आऽरइ|

१ ३२र१ ६ २ १ र ३२ १

ऊऽर| आऽरयाम्| अयायम्| औऽ३होऽ३इ| आऽरइ| ऊऽर| यमस्ययोनौशकुनांभुरण्युम्|

३२ १ ६ २ १ ३२र१ ६ २

भुरण्युम्| औऽ३होऽ३इ| आऽरइ| ऊऽर| आऽरयाम्| अयायम्| औऽ३होऽ३इ| आऽरइ| ऊऽर|

र २ १ २ १

वाहाऽ३१उवाऽ२३| एऽ३| दिवम्|(२) एऽ३| दिवाऽ२३४५म्||

–ओम् यमाय नमः–यमम् आवाहयामि स्थापयामि|

123

(५) विनियोगः– अहमस्मि इति आत्मा त्रिष्टुप् तत्पुरुषः आवाहने विनियोगः|

३ १२ ३२ ३ २ ३ १२ ३ १ २ ३ १२ ३ १ २

ओम् अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम|

२ ३ १ २ ३ २उ ३१२ ३२उ ३१२ ३१ २

यो मा ददाति स इदेवमावदहमन्नमन्नमदन्तमद्मि||

विनियोगः–सेतुसाम्नः प्रजापति स्त्रिष्टुबात्मा तत्पुरुषः आवाहने विनियोगः|

२र १रर २ १ र२र१र र२ २र

ओम् हाउ|(३) सेतूँ स्तर|(३) दुस्त| रान्|(३) दानेनादानम्|(३) हाउ|(३)

र १ २ १११ २र १रर २ १

अहमस्मिप्रथमजाऋताऽ२३स्याऽ३४५| हाउ|(३) सेतूँ स्तर|(३) दुस्त| रान्|(३)

र२र१ र२ १ र२र१ र २र र र र र १ २ १११२र १रर २

अक्रोधेनक्रोधम्|(२) अक्रोधेनक्रोधम्|हाउ|(३)पूर्वन्देवेभ्योअमृतस्यनाऽ२३माऽ३४५|हाउ|(३)सेतूँस्तर|(३)

१ २१ र २र २र र र र र १ २ १११ २र

दुस्त| रान्|(३) श्रद्धयाश्रद्धाम्|(३) हाउ|(३) योमाददातिसइदेवमाऽ२३वाऽ३४५त्| हाउ|(३)

१रर २ १ २१र र २ २र १ २

सेतूँ स्तर|(३) दुस्त| रान्|(३)सत्येनानृतम्|(३)हाउ|(३)अहमन्नमन्नमदन्तमाऽ२३द्मीऽ३४५|

२र र१र २र१२१ १ २ १र २

हाउ|(३) एषागतिः|(३) एतदमृतम्|(३) स्वर्गच्छ|(३) ज्योतिर्गच्छ|(३)

१रर २र १र२१ ११११

सेतूँ स्तीर्त्वाचतुराऽ२३४५ः||

–ओम् तत्पुरुषाय नमः–तत्पुरुषम् आवाहयामि स्थापयामि|

विनियोगः– वाक्मनः प्राणेति ऋतवोऽनुष्टुप् सूर्यः प्रतिष्ठापने विनियोगः|

१ १ २र१ २र१र२र१र २र १ २ १र२ १२ १२१र २ १र

ओम् वाक्| मनः प्राणः प्राणो पानो व्यानश्चक्षुः श्रोत्रँ शर्म वर्म भूतिः प्रतिष्ठा||

ओम् एता एव समहाव्रताः सर्वावा एता विराजो दशिनी प्रथमा विँशिनी द्वितिया त्रिँशिनी तृतीयैषावै परमाविराड् यच्चत्वारिँशद्रात्रयः पंक्तिर्वै परमा विराट् परमायेव विराजिप्रतितिष्ठन्ति|

–ओम् ब्रह्मादितत्पुरुषपर्यन्ताः पंचदेवताः सुप्रतिष्ठिताः वरदा भवत| ( यथालाभोपचारैः –ओम् ब्रह्मादितत्पुरुषपर्यन्तेभ्यः इति मन्त्रेण संपूज्य्)

– अनेन मत्कृतेन पूजनेन ब्रह्मादितत्पुरुषपर्यन्ताः पंचदेवताः प्रीयन्ताम्|

124

–अथ ब्रह्मसूक्तः|

विनियोगः–सोमँ राजानमिति बृहस्पतिरनुष्टुप् सोमः; ब्रह्मजज्ञानमिति द्वयो ऋतुस्त्रिष्टुब् ब्रह्मा; हाउस्वरेति द्वयो प्रजापतिस्त्रिष्टुबिन्द्रः; ब्रह्मसूक्तः जपे विनियोगः|

२३ १ २३ १२ ३ २ ३ १२ ३ २उ ३ १ २ ३ १ २ ३ २३ १२

ओम् सोमँ राजानं वरुणमग्निमन्वारभामहे| आदित्यं विष्णुँ सूर्यं ब्रह्माणं च बृहस्पतिम्||

४र५ ४र५र ४५ ४ २ १ र २र १ २ २ र १ २ १र२

ओम् सोमँ राजानंवरुणाम्| अग्निमन्वारभामहेऽ३| होवाऽ३हाइ| आदित्यंविष्णुँ सूर्यम्|

१ २ २ १र २ १ २ २ १ ६ २ ३ ५

होवाऽ३हाइ| ब्रह्माणाऽ२३न्चाऽ३| होवाऽ३हाइ| बृहाऽ३उवाऽ३| पाऽ२३४तीम्||

१ २ ३ १ २३ २३ २ ३ १ २३ २ ३ १ २ ३१ २

ओम् ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः|

२ ३क२र ३१ २ ३ २ ३२ ३ २ ३१२ ३ १ २

स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः||(२)

१ २ र १ २ १ २ र र१ २

ओम् ब्रह्मा| ब्राऽ२३ह्मा| जज्ञानंप्रथमंपुरास्तात्| विसाइ| वाऽ२३इसी| मतःसुरुचोवेनआवः|

१ २ र र १ २ १ २ र १ २

सबू| साऽ२३बू| ध्नियाउपमाअस्यवाइष्ठाः| सताः| साऽ२३ताः|चयोनिमसतश्चवाइवाऽ३४३ः|

१

ओऽ२३४५इ। डा॥

१६ २ १ ६ २ १२ १ २ १ २ ३४ ५ २१र २१

हुवेऽ३हाऽ३इ।(२) हिषाऽ३या। ब्रह्मजज्ञा। नाऽ३म्प्रथ। मम्पुरस्तात्। विसीमताः। सुरुचः।

२३४ ५ २१ २ १ र २ ३ ४ ५ २१ २ १ २ ३ ४५

वेनआवाः। सबुध्नियाः। उपमाः। अस्यविष्ठाः। सतश्चयो। नीऽ३मस। तश्चविवाः।

१६ २ १ ३ ५रर २ २ १ २

हुवेऽ३हाऽ३इ।(२) हि। षाऽ२ः। आऽ२३४। औहोवा। एऽ३। ऋतममृतम्।(२)

२ १ ३ १११

एऽ३। ऋतममृताऽ२३४५म्॥

## 125

३ २३ १ २ ३१२ ३१ २र३ १ २३ २३ १ २

—ओम् ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ॥(२)

५र २ १ १ २१ ३ ५ १ १

—ओम् हाउस्वरता। ब्रह्माणाऽरः। इन्द्रम्। आ। महयाऽ२न्तोऽ२३४। कैः। अवाऽरर्द्धयान्।

२ र ३२ २र १ १११

अहयेह। तवाऽ३४५इ। ऊऽ६५६। श्लोकयताऽ२३४५॥

५र २१र १ ३ ५ २ १

—हाउ। अभि। स्वरता। ब्रह्माणआइन्द्राऽरम्। महयाऽ२न्तोऽ२३४। कैः। अवर्द्धायाऽरन्।

२ र १ ३ ५

अहयेहन्तवाऽ२३४५ऊऽ६५६। श्लोऽ२३४काः॥

—अथ विष्णुसूक्तः।

विनियोगः—इदं विष्णुरिति विष्णुर्गायत्री; प्रक्षस्यवृष्णोइति विष्णुर्जगती वैश्वानरः; प्रकाव्यमिति वराह स्त्रिष्टुप् वराहः; सहस्त्रशीर्षा त्रिपादुर्ध्व पुरुषएवेदे तावानस्य ततोविराड कयानश्चित्र इति षणां पुरुषः पन्चानुष्टुप् षष्ट्वा गायत्र्यात्मा; विष्णुसूक्तः जपे विनियोगः॥

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

—ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले||

५ ५ १ ३ २ ३ ५ १ र २ १ २ १

ओम् इदाऽ६मे| विष्णूऽ२ः| विचक्राऽ२३४माइ| त्राइधानि|दधाइपाऽ१दाऽरम्|समूऽरहोऽ१|

२ १ ३ ५रर २ २

ठाऽ२३माऽ३| स्याऽ२पाऽ२३४औहोवा| एऽ३| सुलेऽ१||

३२ ३ १ २ ३२ ३ २उ ३ २ ३ १ २ ३ १२ ३ १२

—प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा जातवेदसे|

३ १ २ ३१ २र३ २ ३ १२ ३ १२ ३ १२

वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये||

126

२र १ १ २ २ १ २१ २ र र

हाउ|(३) ऊऽर|(२) ऊऽ२| वाऽ३| हाउवाऽ३| हस्हहस्| अर्चिशोचिस्तपोहरः|

२१ र २ १ र २ १ र र र र२१र २

प्रक्षस्यवृष्णोअरुषस्यनूमाऽ२३हाः| प्रनोवचोविदथाजातवेदाऽ२३साइ|

१र र र २१र २ १र र र२१ २ २र १

वैश्वानरायमतिर्नव्यसेशूऽ२३चीः| सोमइवपवतेचारुरग्नाऽ२३याऽ३इ| हाउ|(३) ऊऽर|(२)

१ २ २ ३ १११

ऊऽ२| वाऽ३| हाउवाऽ३| इऽ२३४५||

१ २र३१२ ३ २ ३२ ३ २ ३ १ २

—प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति|

१२ ३ १ २ ३२ ३१ २३ २३क२र३ १२

महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन्||

५र र १ २१र २१ र २३ ४ ५ २र१र र २ १ २ ३ ४ ५ २ १

हाउहाउ| हुप्| प्रकावियाम्| उशने| वब्रुवाणाः| देवोदेवा|नाऽ३न्जनि|माविवक्ती|महिव्रताः|

२ २ ३ ४५ ५र र १ २१र २ १ २ २ ४

शुचिबाऽ३|धुःपवाकाः|हाउहाउ| हुप्| पदावरा|होऽ३अभि|आऽ३४३इ|तीऽ३राऽ५इभाऽ६५६न्||

३१ २ ३ १२ ३ २ ३१ २ १र २र ३ १ २ ३ १ २ ३ २

सहस्त्रशीर्षाःपुरुषःसहस्त्राक्षः सहस्त्रपात्|स भूमि ँ सर्वतो वृत्वा त्यतिष्ठद्दशा ँ गुलम्||

२१ २ १ र र २ र१ २१ २

उहुवाहाउ|(३) सहस्त्रशीर्षाःपुरूऽ२३षाः| सहस्त्राक्षःसहस्त्राऽ२३पात्|

१ र २१र २ १ २१र २ १ २ १ ६ २

सभूमि ँ सर्वतोवाऽ२३र्त्वा| अत्यतिष्ठद्दशाङ्गुऽ२३लाम्| उहुवाहाउ|(२)उहुवाऽ३हाउ|वाऽ३|

१ १११

इट्इडाऽ२३४५||

३ २ ३२उ ३ १२३ २ ३१ २३ १२ २३ २३क २र ३२ ३ २

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः|तथा विष्वङव्यक्रामदशनानशने अभि||

127

२१ र र १र र र २ १र र र र २१ २

उहुवौहोवाऽर|(३) त्रिपादूर्ध्वउदैत्पुरूऽ२३षाः| पादोस्येहाभवत्पूऽ२३नाः|

१ र २१ २ र १र २ १ रर १ र

तथाविष्वङ्वियक्राऽ२३मात्| अशनानशनेआऽ२३भी| उहुवौहोवाऽर|(२) उहुवौ| होऽ२|

३ ५रर ३ ५ २१ रर १ र ३ ५रर

वाऽ२३४| औहोवा| ईऽ२३४डा| उहुवौहोवाऽर|(२) उहुवौ| होऽ२| वाऽ२३४| औहोवा|

३ ५ २१ रर १ र ३ ५रर १११

`सूऽ२३४वाः| उहुवौहोवाऽर|(२) उहुवौ| होऽ२| वाऽ२३४| औहोवा| ऊऽ२३४५||

१२ ३२उ ३ २ ३२उ ३ १ २ १ २ ३ १ २३ १२ ३ १२ ३ १ २ ३ २

पुरुष एवेद ँ सर्वं यद्भूतं यच्च भाव्यम्| पादोऽस्य सर्वाभूतानि त्रिपादस्या मृतं दिवि||

१ र र १ रर २ १ र २१र २ १रर र र २
इयौहोवाऽर|(३) पुरुषएवेदँ साऽ२३र्वाम्| यद्भूतंयच्चभावाऽ२३याम्|पादोस्यसर्वाभूताऽ२३नी|
१र र २१ २ १ र र १ र ३ ५रर ३ ५
त्रिपादस्यामृतंदाऽ२३वी| इयौहोवाऽर|(२) इयौ| होऽ२| वाऽ२३४| औहोवा| ईऽ२३४डा|
१ र र १ र ३ ५रर ३ ५ १ र र १ र
इयौहोवाऽर|(२) इयौ| होऽ२| वाऽ२३४| औहोवा| ज्योऽ२३४तीः| इयौहोवाऽर|(२) इयौ|
३ ५रर ३ १११
होऽ२| वाऽ२३४| औहोवा| ईऽ२३४५||

१ २ ३२र ३ १ २ ३ १२ ३ १२३ १ २र३१ २र ३ १२
तावानस्य महिमा ततो ज्यायाँ श्च पूरुषः|उतामृतत्वस्येशानोयदन्ने नातिरोहति||
२र १रर २ १ २ २र १ र र र २१र २ २र
हाउ|(३) तावानस्य| महाऽ२३इमाऽ३| हाउ|(३) ततोज्यायाङ्श्चपूरूऽ२३षाऽ३ः| हाउ|(३)
१र र २ २र १ र र २१र २ २र १ १११
उतामृतत्वस्येशाऽ२३नाऽ३ः|हाउ|(३)यदन्नेनातिरोहाऽ२३तीऽ३|हाउ|(३)वाऽ३|इट्इडाऽ२३४५|
१ २ ३ १२ ३२ ३ २ ३ १२ २३ १ २र ३२उ ३ १२ ३२
ततो विराडजायत विराजो अधि पुरुषः| सजातो अत्यरिच्यतपश्चाद्भूमिमथो पुरः||



२ १ र२१र २र १र२र१ २१र २
हाउहाउहाउवा| ततोविराडजायत| हाउहाउहाउवा| विराजोअधिपूरूषः| हाउहाउहाउवा|
१२र१र २ १र र२१ र २१ २ ३ १११
सजातोअत्यरिच्यत| हाउहाउहाउवा| पश्चाद्भूमिमथोपुरः| हाउहाउहाउवाऽ३| ईऽ२३४५||
१ २ ३१ २र ३ २ ३ १३२ १ २ २ ३ १२ ३२
कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||
२र १ २१ २ १ २ १ २ १ २ र १ २

हाउ|(३) अस्मीनस्मिन्|(३) नृम्णाइनृम्णम्|(३) निधाइमाहे|(३)कयानश्चित्रऽ३आभूऽ१वाऽरत्|
र र र १ २ र १ २ २र १ २ १ २

ऊतीसदावृऽ३धाःसाऽ१खाऽर| कयाशचिष्ठऽ३यावाऽ१त्तीऽ२३| हाउ|(३) अस्मीनस्मिन्|(३)
१ २ १ २ १ २ १ १ २ ५र र १ र ३ १११

नृम्णाइनृम्णम्|(३)निधाइमाहे|(२) निधाऽ२३इ| माऽ२|हाऽ२३४|औहोवा|सुवर्ज्योतीऽ२३४५ः||

—अथ रुद्रसूक्तः|

विनियोगः—आवोराजेति वामदेव स्त्रिष्टुप् रुद्रः; तद्वोगायेति पूर्वद्वयो रुद्र उत्तरद्वयोर्मृगयुर्गायत्रीन्द्रः; आज्यदोहेति त्र्याणां अग्निर्वैश्वानरस्त्रिष्टुबग्निर्वैश्वानरः; देवव्रतानां देवा उत्कृती रुद्रः; रुद्रसूक्तः जपे विनियोगः|

२ ३ १ २ ३१ २ ३ १ २र ३ २ ३ १ २

—ओम् आ वो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः|
३ २ ३१ २ ३ २ ३२ ३ १ ३ १२

अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्||
४र५र र४ ३२३ २ ३४ ५ १ २र १ २ २३ ४ ५ २ १

—ओम् आवोराजा| नमध्व| रस्यरुद्राम्| हो| ता| राम्| स| त्ययजाऽ३म्|रोदसीयोः|अग्निंपु|
२ ३ २ ३४ ५ १ २ १ २ १ २ २ ४

रा| तनयि| त्नोरचित्तात्| हिरण्य| रू| पाऽ३मव| साऽ३४३इ| काऽ३र्णूऽ५ध्वाऽ६५६म्||१||
१ २ ३ १ २र ३२३ १ २ २उ ३ २ ३ १ २

—ओम् तद्वो गाय सुते सचा पुरुहूताय सत्वने| शं यद्गवे न शाकिने||(४)



५ र४ ५ १ ३ २ ३ ५ १ २रर १ २ १

—ओम् तद्वौहोवा| गायाऽ२| सुताइसाऽ२३४चा| पुरुहूता| यसात्वाऽ१नाऽरइ| शंयत्| हा|
२ २ ३ ५ १ ३ ५रर २ १ १११

औऽ३होइ| गाऽ२३४वाइ| नाऽ२शाऽ२३४औहोवा| एऽ३| किनेऽ२३४५||२||
५ र र २ १ र२ ३र२ १ २ ३ ५

–ओम् तद्वोगाया| सुताइसचाऽ३| पूरुऽ२३हूताऽ३४| हाहोऽ३| यासत्वाऽ२३४नाइ|
२१ २ १ ५ ४ ५
शंयद्गाऽ२३वे| नशौऽर| हौऽर| हुवोऽ२३४| वा| काऽ५इनोऽ६हाइ||३||
५ र र र ५ २ र१र २र १ २रर १ ७ २ ५
–ओम् तद्वोगायसुतेसचाऽ६ए| पुरुहूतायसत्वने| पुरुहूता| यासत्वाऽ२३नाऽ३४इ| शंयत्|
२ ३ ५ १ ४ २ ५
गौवाओऽ२३४वा| नाऽ२३शाऽ३| काऽ३४५इनोऽ६हाइ||४||
५ र र र ५ २ र१र २ २
–ओम् तद्वोगायसुतेसचाऽ६ए| पुरुहूतायसत्वनाइ| शंयद्गाऽ२३वे| ऐऽरहोऽ१आऽ२३इही|
१ १ ३ ५र र ३ १११
नशाऽ२३| काऽ२इनाऽ२३४औहोवा| ईऽ२३४५||५||
३१२ ३ १ २३ १ २ ३ १ २ ३२ ३२उ ३२ ३ २
–ओम् मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्|
३ २ ३ २३ १ २ ३ १ २ ३२ ३ १ २ ३ २
कवि ँ सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः||(३)
२र र ३ ४र५ २र१र २ १ २ ३ ४ ५ २र१र २ १ र
–ओम्हाउ|(३) आज्यदोहम्|(३) मूर्द्धानन्दाइ| वाऽ३अर| तिंपृथिव्याः| वैश्वानराम्| ऋतआ|
२र३४ ५ २ १ २ १ २ ३४र५ २र१ २ १ २ ३४र५
जातमग्नीम्| कवि ँ सम्रा| जाऽ३मति| थिंजनानाम्| आसन्नःपा| त्राऽ३न्जन| यन्तदेवाः|
२र र ३४र५ २र ३ ४ २र र १ २ २र र १ ३ १११
हाउ|(३)आज्यदोहम्|(२)आज्यदोऽ५हाउ|वा| ए| आज्यदोहम्|(२)ए|आज्यदोहाऽ२३४५म्|६|



२र र १ २ २र१र २ १ २ ३ ४ ५ २र१र २ १ र
–ओम्हाउ|(३) हुम्| चिदोहम्|(३) मूर्द्धानन्दाइ| वाऽ३अर|तिंपृथिव्याः|वैश्वानराम्|ऋतआ|
२र३४ ५ २ १ २ १ २ ३ ४र५ २र१ २ १ २ ३४र५

जातमग्नीम्| कविँ सम्रा| जाऽ३मति| थिंजनानाम्| आसन्नःपा| त्राऽ३न्जन| यन्तदेवाः|
२र र १२ ६ २ १११
़हाउ|(३) हुम्| चिदोहम्|(२) चिदोऽ३हाउ| वाऽ३| ईऽ२३४५||७||
२र १ २ २र१र २ १ २ ३ ४ ५ २र१र २ १ र
–ओम्हाउ|(३) च्योहम्|(३) मूर्द्धानन्दाइ| वाऽ३अर| तिंपृथिव्याः| वैश्वानराम्| ऋतआ|
२र३४ ५ २ १ २ १ २ ३ ४र५ २र१ २ १ २ ३४र५
जातमग्नीम्| कविँ सम्रा| जाऽ३मति| थिंजनानाम्| आसन्नःपा| त्राऽ३न्जन| यन्तदेवाः|
२र १ २ ६ २ २ २ १
़हाउ|(३) च्योहम्|(२) च्योऽ३हाउ| वाऽ३| एऽ३| ऋतम्||८||
१ २ १ २ १ २ १ २ १ २ १
–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|
२ १ र२ १र रर२ १र २१र २१२र१ २र १र२१रर२र १ २रर
मन्युनावृत्रहासूर्येणस्वराडयज्ञेनमघवादक्षिणास्यप्रियातनूराज्ञाविशंदाधार|
१ र२१र २ र१ २१ र१ २ १र २ १र र २र१
वृषभस्त्वष्टावृत्रेणशचीपतिरन्नेगयःपृथिव्यासृणिकोग्निनाविश्वंभूतम|
२ र र१ र र २१र २ र र१रर २१र र र२ र १र २र र१र
भ्यभवोवायुनाविश्वाःप्रजाअभ्यपवथावषट्कारेणार्द्धभाक्सोमेनसोमपाःसमित्यापरमेष्ठी|
१रर२ररर १२ १ र र२रर रर१र२र१२ १रर२रर र १२
येदेवादेवाः| दिविषदः| स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| अन्तरिक्षसदः|
१ र र२रर रर१र२र१२ १रर२रर र र १२ १ र र२रर रर१र२र१२
स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| पृथिवीषदः| स्थतेभ्योवोदेवादेवेभ्योनमः|
१रर२ररर १२ १ र र२रर रर१र२र१२ १रर२रर र १२
येदेवादेवाः| अप्सुषदः| स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| दिक्षुसदः|
१ र र२रर रर१र२र१२ १रर२रर र र र १२ १ र र२रर रर१र२र१२
स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| आशासदः| स्थतेभ्योवोदेवादेवेभ्योनमः|
१२ १र २१ २र १ र२१ २र १ र २ १ २ १ २ १ २ १ र
अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा|यइदंविश्वंभूतम्|
२ १ ५

युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||६||



१ २ १ २ १ २ १ २ १ २ १

–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|

२ १ २र र१र २ १ र२र १ २र र१ २ १ र २

नमउत्ततिभ्यश्चोत्तन्वानेभ्यश्चनमोनीषंगिभ्यश्चोपवीतिभ्यश्चनमोस्यद्भ्यश्चप्र|

१ र२र १ २१ २ र १ २१ २ १ २ र १ २१ २

तिदधानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्चनमःत्सरद्भ्यत्सारिभ्यश्चनमःश्रि|

१र २ र १ २ १ २ १ २ र १ २ १ र२१र २ १र२१ २१र२१ २र

तेभ्यश्चश्रायिभ्यश्चनमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्चनमोयतेचवियतेचनमःपथेचविपथायच|

१२ १र २१ २र१ र२ १ २र १ र २ १ २ १ २ १ २ १ र

अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|

२ १ ५

युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||१०||

१ २ १ २ १ २ १ २ १ २ १

–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|

र र २१र २ र र१र २र र १र २ १२र१

नमोन्नायनमोन्नपतयएकाक्षायचावपन्नादायचनमोनमः|

२१र २र १२र१ २१र २१ २ र१२ १ २ र १ र२ १२ १ २ र

रुद्रायतीरसदेनमःस्थिरायस्थिरधन्वनेनमःप्रतिपदायचपटरिणेचनमस्त्रियम्बकायचक|

१ र२ १ २र र१र २ र र १र २ १ २१र २ १र २ १ २ १र२ १२र

पर्दिनेचनमआश्रायेभ्यश्चप्रत्याश्रायेभ्यश्चनमःक्रव्येभ्यश्चविरिम्फेभ्यश्चनमःसंवृतेचविवृतेच|

१२ १र २१ २र१ र२ १ २र १ र २ १ २ १ २ १ २ १ र

अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|
२ १ ५
युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||११||

132

–अथ यमसूक्तः|
विनियोगः–अग्नेमृडइतिद्वयोःयमोगायत्र्याग्निः; नाकेसुपर्णेति यमस्त्रिष्टुप्यमः;यमसूक्तःजपेविनियोगः||
१ २ ३२ ३ २ ३ २ ३ १ २३१ २र ३१ २ ३२ ३१ २
ओम् अग्ने मृड महा ँ अस्यया आ देवयुं जनम्| इयेथ बर्हिरासदम्||(२)
१ अ ३२ ३ ५ १ र ३२ ३ ५ १ र
ओम् अग्नाइमृडाऽ२| महा ँ आऽ२३४सी| अयआदाऽ२इ| वयुन्जाऽ२३४नाम्| इयेथबाऽ२३|
३ २ ४
हिराऽ३साऽ५दाऽ६५६म्||
३४र ३४३र ४५ ३र२ ४५ ३४३र४र ३ ४५ ३र२ ४ ५ २१र २
अग्नेमृडमहा ँ असि| ओहाऽ३ओहा| अयआदेवयुन्जनम्| ओहाऽ३ओहा| इयेथाऽ२३ब|
३ २ ४
हिराऽ३साऽ५दाऽ६५६म्||
१ २ ३२उ ३ १ २र ३ १ २र ३ १ २
ओम् नाके सुपर्णमुप यत्पतन्त ँ हृदा वेनन्तो अभ्यचक्षत त्वा|
१ २ ३ १२ ३ २ ३२ ३ १ २ ३ १ २३ २
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्||
१ ३२र१ ६ २ १रर ३२ १
ओम् आऽरयाम्| अयायम्| औऽ३होऽ३इ| आऽरइ| ऊऽर| नाकेसुपार्णमुपयात्पतन्ताम्|
३२ १ ६ २ १ ३२र१ ६ २
पतन्तम्| औऽ३होऽ३इ| आऽरइ| ऊऽर| आऽरयाम्| अयायम्| औऽ३होऽ३इ| आऽरइ| ऊऽर|
१ रर र ३ २ १ ३ २ ६ ६ २ १ ३२र१

हृदावेनान्तोअभ्यचाक्षतत्त्वा| क्षतत्वौऽ३| औऽ३होऽ३इ| आऽरइ| ऊऽर| आऽरयाम्|अयायम्|
६ २ १ ३२र१ ३२र१ ६ २
औऽ३होऽ३इ| आऽरइ| ऊऽर| हिरण्यपाक्षंवरुणास्यदूताम्| स्यदूतम्| औऽ३होऽ३इ| आऽरइ|
१ ३२र१ ६ २ १ र ३२ १
ऊऽर| आऽरयाम्| अयायम्| औऽ३होऽ३इ| आऽरइ| ऊऽर| यमस्ययोनौशकुनांभुरण्युम्|
३२ १ ६ २ १ ३२र१ ६ २
भुरण्युम्| औऽ३होऽ३इ| आऽरइ| ऊऽर| आऽरयाम्| अयायम्| औऽ३होऽ३इ| आऽरइ| ऊऽर|
र २ १ २ १
वाहाऽ३१उवाऽ२३| एऽ३| दिवम्|(२) एऽ३| दिवाऽ२३४५म्||

133

—अथ तत्पुरुषसूक्तः|

विनियोगः— सेतुसाम्नः प्रजापति स्त्रिष्टुबात्मा तत्पुरुषः सूक्तः जपे विनियोगः||
३ १२ ३२ ३ २ ३ १२ ३ १ २ ३ १२ ३ १ २
ओम् अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम|
२ ३ १ २ ३ २उ ३१२ ३२उ ३१२ ३१ २
यो मा ददाति स इदेवमावदहमन्नमन्नमदन्तमद्मि||
२र १रर २ १ र२र१र र२ २र
ओम् हाउ|(३) सेतूँ स्तर|(३) दुस्त| रान्|(३) दानेनादानम्|(३) हाउ|(३)
र १ २ १११ २र १रर २ १
अहमस्मिप्रथमजाऋताऽ२३स्याऽ३४५| हाउ|(३) सेतूँ स्तर|(३) दुस्त| रान्|(३)
र२र१ र२ १ र२र१ र २र र र र र १ २ १११२र १रर २
अक्रोधेनक्रोधम्|(२) अक्रोधेनक्रोधम्|हाउ|(३)पूर्वन्देवेभ्योअमृतस्यनाऽ२३माऽ३४५|हाउ|(३)सेतूँस्तर|(३)
१ २१ र २र २र र र र र १ २ १११ २र
दुस्त| रान्|(३) श्रद्धयाश्रद्धाम्|(३) हाउ|(३) योमाददातिसइदेवमाऽ२३वाऽ३४५त्| हाउ|(३)
१रर २ १ २१र र २ २र १ २
सेतूँ स्तर|(३) दुस्त| रान्|(३)सत्येनानृतम्|(३)हाउ|(३)अहमन्नमन्नमदन्तमाऽ२३द्मीऽ३४५|
२र र१र २र१२१ १ २ १र २
हाउ|(३) एषागतिः|(३) एतदमृतम्|(३) स्वर्गच्छ|(३) ज्योतिर्गच्छ|(३)

१रर   २र १र२१      ११११

सेतूँ स्तीर्त्वाचतुराऽ२३४५ः||

– अनेन मत्कृतेन पूजनेन ब्रह्मादितत्पुरुषपर्यन्ताः पंचदेवताः प्रीयन्ताम्|

## || अथ प्रायश्चित्त होमः ||

संकल्पः– अत्राद्य–––वासरे अस्मिन्कुण्डे स्थण्डिले वा पंचभूसंस्कारपूर्वकं अग्निस्थापनं करिष्ये|

पंचभूसंस्काराः|

१, दर्भैः परिसमुह्य परिसमुह्य परिसमुह्य| ( त्रिभिः कुशैः कुण्डस्य स्थण्डिलस्य वा पश्चिमभागाद् आरभ्य प्रान्चं त्रिवारं संमृज्य )

२, गोम्यादकाभ्यामुपलिप्य उपलिप्य उपलिप्य| ( तथैव गोमयेन त्रिवारं उपलिप्य )

ततो वामहस्तम् अग्निनिधानपर्यन्तं कुण्डे स्थण्डिले वा निधाय|

३, कुशमूलेन उल्लिख्य उल्लिख्य उल्लिख्य| ( दक्षिणहस्तेन कुशमूलेन कुण्डस्य स्थण्डिलस्य वा सार्धांगुलमितां भूमिं दक्षिणतः त्यक्त्वा प्राग्गतां प्रादेशमात्रां लेखाम्; तन्मूललग्नाम् उददिग्गतांद्वितीयां एकविंशत्यंगुलमितां लेखाम् उल्लिख्य; प्रथम रेखायाः उत्तरस्यां सप्तांगुलम् अन्तरं त्यक्त्वा प्रादेशमात्राः तिस्त्रः रेखाः कुर्यात् )

४, अनामिकांगुष्ठेन उद्धृत्य उद्धृत्य उद्धृत्य| ( उल्लेखनक्रमेण प्रान्चं उदन्चं च अनामिकांगुष्ठाभ्यां पांसून् नीत्वा ऐशान्याम् अरत्निमात्रप्रदेशे निक्षिपेत् )

५, उदकेन अभ्युक्ष्य अभ्युक्ष्य अभ्युक्ष्य| ( जलेन ता अभ्युक्ष्य )

अग्निस्थापनपूजनम्| ( आनीतमग्निं कुण्डस्य स्थण्डिलस्य वा अग्नेय्यां दिशि निधाय; ओम् हुं फट् इति मन्त्रेण नैर्ऋत्यां दिशि आमक्रव्यादांशौ परित्यज्य; अग्निपात्रमादाय त्रिर्भ्रामयित्वा योनिमार्गेण नीत्वा आत्माभिमुखमग्निं कुण्डे स्थण्डिले वा स्थापयेत् )

विनियोगः– अग्निंदूतेति मेधातिथिः काण्वः गायत्र्यग्निः स्थापने विनियोगः|

३ २ ३ १ २ ३ १२ ३ १२ ३ २ ३ १ २ ३ १ २

ओम अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्| अस्य यज्ञस्य सुक्रतुम्||

विनियोगः– अग्निं दूतेति भरद्वाजो गायत्र्यग्निः स्थापने विनियोगः|

५ र २१र र र २ २१र २ १

ओम् अग्निन्दूताम्| वृणीमहाइ| होताराऽ२३म्वी| श्ववेदसाम्| अस्ययाऽ२३ज्ञा| आ|
२ र २ १ २ १ २ १
औऽ३होवा| स्यासुक्रतुम्| इडाऽ२३भाऽ३४३| ओऽ२३४५इ| डा||
ओम भूर्भुवःस्वः विट्नामानमग्निम स्थापयामि| ( अग्नयानीतपात्रे साक्षतोदकंनिषिच्य )
135
विनियोगः– अग्न आयाहीति भरद्वाजो बार्हस्पत्यः गायत्र्यग्निः आवाहने विनियोगः|
२ ३ १ २ ३१२ ३ २ ३ १ २ १ २र ३ १ २
ओम् अग्न आयाहि वीतये गृणानो हव्य दातये| निहोता सत्सि बर्हिषि||
विनियोगः– अग्न आयाहीति गौतमो गायत्र्यग्निः आवाहने विनियोगः|
४ ५४र५र ४ ४ १ र र २ २ २ २ ३ ५
ओम् अग्नआयाहि| वाऽ५इतयाइ| गृणानोहव्यदाऽ१ताऽ३ये| निहोताऽ२३४सा|
१ २ १ ५ ५
त्सा२३इवाऽ३| हाऽ२३४इषोऽ६हाइ||

ओम अग्ने वैश्वानर शाण्डिल्यगोत्र शाण्डिल्यासितदेवलेति त्रिप्रवरान्वित भूमिर्माता वरुणः पिता मेषध्वज प्राङ्मुख मम सम्मुखो वरदो भव| ( इति संपूज्य प्रार्थयेत् )

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम्| सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्||१||
रुद्रतेजः समुद्भूतं द्विमूर्धानं द्विनासिकम्| षण्नेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम्||२||
याम्यभागेचतुर्हस्तं सव्यभागेत्रिहस्तकम्|स्त्रुवं स्त्रुचं च शक्तिं च अक्षमालां चदक्षिणे||३||
तोमरं व्यजनं घृतपात्रं च वामके| बिभ्रतं सप्तभिर्हस्तैः द्विमुखं सप्तजिह्वकम्||४||
दक्षिणेच चतुर्जिह्वंत्रिजिह्वमुत्तरंमुखम्|कोटिद्वाददशमूर्त्याख्यंद्विपन्चाशत्कलायुतम्||५||
स्वाहा स्वधा वषट्कारैरंकितं मेषवाहनम्| रक्तमाल्याम्बरधरं रक्त पद्मासनस्थितम्||६||

त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते| आगच्छ भगवन्नग्ने यज्ञेऽस्मिन् सन्निधो भव||७||

`सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखम्| विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु||८||

ओम् भूर्भुवः स्वः विट्नामाग्नये नमः नमस्करोमि|

संकल्पः– अनेन पंचभूसंस्कार पूर्वकं अग्निस्थापनेन विट्नामाग्निः प्रीयतां न मम|



–कुशाण्डि प्रयोगः|

( इन्धन प्रक्षेपेणामग्निं सुसमिध्य ) प्रादेशमितां समीधमग्नौ तूष्णीं हुत्वा|

नयन्चकरणम्|

( दक्षिणं जान्वाच्य वामहस्ताद् बाह्यतो आत्माभिमुखांगुल्यग्रं कुण्डस्य स्थंण्डिलस्य वा वायुकोणे सन्न्यस्य वामहस्तम् अग्न्यभिमुखांगुल्यग्रं नैर्ऋत्कोणे संन्यस्य )

विनियोगः– इदं भूमेरिति प्रजापतिः अनुष्टुबग्निः नयन्चकरणे विनियोगः|

इदं भूमेर्भजामह इदं भद्रॅं सुमंगलम्| परा सपत्नान् बाधस्वान्येषां विन्दते धनम्||

परिसमूहनम्|

(अग्न्यभिमुखांगुल्यग्रं गृहीत कुशादि हस्ताभ्यां परिसमूहनमुपविष्ट एव प्रादक्षिण्येन प्रत्यर्चं कुर्यात्)

विनियोगः– इमॅं स्तोमेति त्रयाणां कुत्सो जगत्यग्निः परिसमूहने विनियोगः|

ओम् इमॅं स्तोममर्हते जातवेदसे रथमिव संमहे मामनीषया|

भद्रा हि नः प्रमतिरस्यसॅं सद्यग्ने सख्ये मारिषा मा वयं तव||१||

भरामेध्मं कृणवामा हवीॅं षिते चितयन्तः पर्वणा पर्वणा वयम्|

जीवातवे प्रतरॅं साधयाधियोऽग्ने सख्ये मारिषा मा वयं तव||२||

शके मत्वा समिध ँ साधयाधियस्त्वे देवा हविरदन्त्याहुतम्।

त्वमादित्या ँ आवहतान् ह्युश्मस्यग्ने सख्ये मारिषा मा वयं तव॥३॥

( ततः प्रादक्षिण्येन अग्नेर्दक्षिणतो गत्वा कुण्डात् स्थण्डिलाद् वा बाहुमात्रां भूमिं दक्षिणतस्त्यक्त्वा तत्र प्राङ्मुखः स्थित्वा यज्ञीयवृक्षजं पीठं ब्रहमासनत्वेन संस्थाप्य तदुपरि त्रीन् कुशानास्तीर्य स्वासनमागच्छेत्; अ अथ ब्रहमा प्रादक्षिण्येन अग्नेर्दक्षिणतो गत्वा स्वासने अग्निमारभ्य प्रादक्षिण्येन उदङ्मुखीं जलधारामविच्छिन्नां दत्वा; आस्तीर्ण
कुशानां पूर्वतः प्रत्यङ्मुखस्तिष्ठन् वामहस्तांगुष्ठानामिकाभ्याम् आसनात् तृणं गृहीत्वा )

तृणनिरसनम्।

विनियोगः— प्रजापतिर्यजुः परावसुर्देवता तृणनिरसने विनियोगः।

ओम् निरस्तः परावसुः। ( इति नैऋत्यां तत् तृणं निक्षिप्य; उदकं स्पृष्टवा )

ब्रहमोपवेशनम्।

विनियोगः— वसिष्ठो यजुः परावसुर्देवता आसनोपवेशने विनियोगः।

ओम् आवसोः सदने सीदामि।



पात्रासादनम्।

( अग्नेरुत्तरस्यां पूर्वपूर्वक्रमेण उत्तरदिग्गताग्रं प्रागग्रान् दर्भान् आस्तीर्य तस्योपरि पात्राणि आसादयेत् )
यथा—शुद्धोदकपात्रम्; कुशाः; चरुस्थाली; उलूखलमुसल; कंसपात्रम्( निर्वापग्रहणार्थम् ) सहविः शूर्पम्; पवित्रद्वयम् ( चरुस्थाल्यां निधानार्थम् ) मेक्षणम्;
विशाखच्छिन्नपरिस्तरणार्थं मुष्टिचतुष्टय बर्हिः; प्रादेशद्वयमितो विंशति काष्ठक इध्मः; घृतम्; आज्यस्थाली; प्रादेशमितं समिद्द्वयम्; संमार्ग कुशाः; स्त्रुक्स्त्रुवौ; सुपात्रस्थमुष्णोदकम्; बहुभोक्तृपुरुषाहारपरिमितमन्नादिना पूर्णपात्रम्; अर्कादि वृक्षाणां

समिधः अभावे पलाश समिधो वा होमार्थ तिलाः; गोनिष्क्रयभूतं द्रव्यम्।

( गायत्र्या तदभिमन्त्र्य कुशाग्रगृहीतजलेनासादनक्रमेण पात्राणि कर्मसाधनसामग्रीं च प्रोक्ष्य; कांस्यपात्रेण निर्वापपक्षे निर्वापात् पूर्वं सजलां चरुस्थालीमग्नावधिश्रयेत् स्थाल्या निर्वापपक्षे निर्वापोत्तरमधिश्रयणम् पश्चादग्नेः प्रागग्रान्स्त्रीन्दर्भानास्तीर्य तेषु प्रक्षालिते

तेभ्यश्चश्रायिभ्यश्चनमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्चनमोयतेचवियतेचनमःपथेचविपथायच|
१२ १र २१ २र१ र२ १ २र १ र २ १ २ १ २ १ २ १ र
अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|
२ १ ५
युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||१०||

१ २ १ २ १ २ १ २ १ २ १
–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|
र र २१र २ र र१र २र र १र २ १२र१
नमोन्नायनमोन्नपतयएकाक्षायचावपन्नादायचनमोनमः|
२१र २र १२र१ २१र २१ २ र१२ १ २ र १ र२ १२ १ २ र
रुद्रायतीरसदेनमःस्थिरायस्थिरधन्वनेनमःप्रतिपदायचपटरिणेचनमस्त्रियम्बकायचक|
१ र२ १ २र र१र २ र र १र २ १ २१र २ १र २ १ २ १र२ १२र
पर्दिनेचनमआश्रायेभ्यश्चप्रत्याश्रायेभ्यश्चनमःक्रव्येभ्यश्चविरिम्फेभ्यश्चनमःसंवृतेचविवृतेच|
१२ १र २१ २र१ र२ १ २र १ र २ १ २ १ २ १ २ १ र
अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|
२ १ ५
युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||११||



परिस्तरणम्|

( अग्नि समाधानं कुर्वीत; कुशैः परिस्तृणुयात् यथा आसादित बर्हिश्चतुर्धा विभज्य एक भागं दक्षिणेनादाय सव्ये कृत्वा तस्माच्च्तुर्थांशमादाय अग्निकोणादारभ्य उदक्संस्थम्ग्नेः पुरस्तात् स्तृत्वा द्वितीयांशमादाय दक्षिणे आग्नेयीसंलग्नं स्तृत्वा पुनः तृतीयांशमादाय उत्तरे प्रागग्रम् ऐशानीसंलग्नं स्तृतवा चर्तुथांश पश्चात् नैर्ऋतिकोणादारभ्य उदक संस्थं स्तृणुयात् ततो द्वितीयभागमादाय सव्ये कृत्वा पूर्ववत् स्तरणम् प्रथमास्तृतानां

प्रागग्रैः अग्रैः मूलानिच्छादयन् पुनरासादितं तृतीयभागमादाय पूर्ववत् मूलानि आच्छादयन् स्तृत्वाचतुर्थभागं यज्ञवास्त्वर्थमेव शेषयेत् १अ़>ई २नै>अ ३वा>ई ४नै>वा)

( ततोऽग्नेरुत्तरतः शुद्धोदकपूर्णां प्रणीतां स्थापयेत्; आसादित विंशतीध्ममादाय प्रणीताभिरद्भिरभ्युक्ष्य प्रजापतिं मनसा स्मृत्वा अग्नावादध्यात इदं मनसा प्रजापतये नमम)

पवित्रच्छेदनम्|

( आस्तीर्ण  शेषाद् बर्हिषः कुशद्वयमादाय सव्ये कृत्वा प्रादेशमात्रं मिमीय व्रीहियवद्यौषधीमन्तर्धाय मन्त्रेण छिनत्ति न नखेन )

विनियोगः— प्रजापतिर्यजुः पवित्रे पवित्रच्छेदने विनियोगः|

ओम् पवित्रे स्थो वैष्णव्यो|( ते पवित्रे सव्येन मूले गृहीत्वा )

विनियोगः— प्रजापतिर्यजुः अनुमार्जने विनियोगः|

ओम् विष्णोर्मनसा पूते स्थः| ( इति प्रणीताद्भिः प्रक्षालयेत् )

आज्य संस्कारः|( आज्यस्थालीम् आत्माग्नयोरन्तराले संस्थाप्य; तस्यामुदगग्रे पवित्रे संन्यस्य उत्तरतः आसादितमाज्यमादाय सपवित्रायामज्यस्थाल्यामावपेत्; ततोऽगुंष्ठाभ्यां पवित्रे मूलदेशे संगृह्य अनामिकाभ्यामग्रदेशे गृहीत्वा )

विनियोगः— प्रजापतिर्यजुः आज्यं देवता आज्योत्पवने विनियोगः|

ओम् देवस्त्वा सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः| ( इति मन्त्रेण आज्यस्थालीस्थमाज्यं पश्चिमभागस्थं पवित्राभ्यामूर्द्धं नीत्वा एवं तूष्णीं वारद्वयं मध्ये पूवदेशे च उत्पूय; पवित्रे सव्येनादाय दक्षिणेन प्रणीताभिरद्भिः संप्रोक्ष्यमग्नौ प्रक्षिपेत्; अग्नौ आज्यमधिश्रित्योदग् उद्वास्य आत्माग्न्योरन्तरासादितस्थालीपाकात्पूर्वस्यामा सादयेत् पूर्वमाज्यमपरः स्थालीपाकः इति सूत्रात् )



ततः प्रसेचनम्|

विनियोगः– अदितेऽनुमन्यस्वेति प्रजापतिः एकपदा गायत्रीच्छन्दः अदित्यनुमति सरस्वत्यो देवता अग्निर्वा अन्जलिप्रसेचने विनियोगः|

ओम् अदितेऽनुमन्यस्व| ( इति प्रणीतास्थं जलं हस्तद्वयेनादाय अग्नेर्दक्षिणतः नै>अ )

ओम् अनुमतेऽनुमन्यस्व| ( इति पश्चात् नै>वा )

ओम् सरस्वत्यनुमन्यस्व| ( इति उत्तरतः वा>ई )

ततः पर्युक्षणम्|

विनियोगः– देवसवितरिति प्रजापतिस्त्रिष्टुप् सविता पर्युक्षणे विनियोगः|

ओम् देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय|

दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वद्तु|| ( एवं ई>ई प्रदक्षिणमग्निं सकृत् त्रिर्वा पर्युक्षेत्; ततो दक्षिणेन समिधाक्षतमादाय )

ब्राह्मणमन्त्रः|

विनियोगः– वसिष्ठो यजुः कालाग्निरुद्रो देवता जपे विनियोगः|

ओम् तपश्च तेजश्च श्रद्धा च ह्रींश्च सत्यं चाक्रोधश्च त्यागश्च धृतिश्च धर्मश्च सत्त्वं च वाक्चमनश्चात्मा च ब्रह्म च तानि प्रपद्ये तानि मामवन्तु भूर्भुवः स्वरों३ महान्तमात्मानं प्रपद्ये विरूपाक्षोसिदन्तांजिस्तस्य तेशय्यार्पणे गृहा अन्तरिक्षे विमित ँ हिरण्मयंतद्देवाना ँ हृदयान्ययस्मयेकुम्भे अन्तः सन्निहितानि तानि बलभृच्च बलसाच्च रक्षतो प्रमनी अनिमिषतः सत्य यत्ते द्वादशपुत्रास्ते त्वा संवत्सरे संवत्सरे कामप्रेण यज्ञेन याजयित्वा पुनर्ब्रह्मचर्यमुपयन्ति त्वं देवेषु ब्राह्मणोस्यहं मनुष्येषु ब्राह्मणो वै ब्राह्मणमुपधावत्युपत्वाधावामि जपन्तमामाप्रतिजापिर्जुहृवन्तं मामाप्रतिहौषीः कुर्वन्तं मामाप्रतिकार्षीस्त्वां प्रपद्ये त्वया प्रसूत इदं वृषोत्सर्गकर्म करिष्यामि तन्मे राध्यतां तन्मे समृध्यतां तन्म उपपद्यता ँ समुद्रोमा विश्वव्यचा ब्रह्मानुजानातु तुथोमा विश्ववेदा ब्रह्मणः पुत्रोऽनुजानातु श्वात्रोमा प्रचेतामैत्रावरुणोऽनुजानातु तस्मै विरूपाक्षाय दंतांजये समुद्राय विश्वव्यचसे तुथाय विश्ववेदसे श्वात्राय प्रचेतसे सहस्त्राक्षाय ब्रह्मणः पुत्राय नमः|

( इत्यन्तं पठित्वा अक्षतमग्नेः प्रादक्षिण्येन समाचाराद् ब्रह्मणे दत्वा तथैव हस्तं परावर्त्याग्नौ समिधं प्रक्षिपेत्; )

( ततः स्त्रुक्स्त्रुवौ मेक्षणं च दक्षिणेनादाय आसादितोष्णोदकेन तानि प्रक्षाल्य सव्ये कृत्वा आसादितन् सम्मार्गकुशानादाय संमार्गकुशैरग्रैर्मूलतोऽग्रपर्यन्तं स्त्रुवं संमृज्य एवमेव स्त्रुचं मेक्षणं च पृथक् सम्मार्ज्य् दक्षिणेनादाय अधोमुखानि प्रान्चमग्नौ प्रताप्य सव्ये कृत्वा प्रणीताभिरद्भिः संप्रोक्ष्य पुनस्त्थैव कुशैः संमार्ज्य प्रताप्य आत्माग्न्योरन्तराले आज्यचर्वोरुत्तरत आसादयेत् )

आज्यभागहोमः|

( ततश्चतुरंगुलं स्त्रुवस्य मूलं त्यक्त्वा; स्त्रुवमादायाज्यस्थालीतः स्त्रुक्चतुष्टयं प्रथम–द्वितीय–तृतीय–चतुर्थक्रमेणसंख्यापूर्वकंस्त्रुचिकृत्वा; षडंगुलंत्यक्त्वा;स्त्रुक्समादाय)

विनियोगः– अग्नये स्वाहेति प्रजापतिर्यजुरग्निः आज्यभाग होमे विनियोगः|

ओम् अग्नये स्वाहा–इदं अग्नये न मम| ( इति समिद्धस्याग्नेरुत्तरभागे प्रांचं जुहुयात्; पुनस्तथैवाज्यमादाय )

विनियोगः– सोमाय स्वाहेति प्रजापतिर्यजुर्सोमः आज्यभाग होमे विनियोगः|

ओम् सोमाय स्वाहा–इदं सोमाय न मम| ( इत्यग्नेर्दक्षिणभागे प्रांचं जुहुयात् )

प्रधानयागः|

( अथ स्त्रुच्याज्यमुपस्तीर्य; अवदानद्वयं चरोर्मध्यात्पूर्वार्द्धच्चावदाय; स्त्रुचि कृत्वा; पंचार्षेयाणां पश्चार्द्धात्तृतीयमादाय; आज्येन प्रत्युपस्तीर्य आज्येनावदानस्थानमवभ्यज्य तत्तद्देवताविशिष्टमृष्यादीन्स्मृत्वा; आदौ प्रधानम् )

–ओम् अग्नये स्वाहा–इदं अग्नये न मम|

ओम् पूष्णे स्वाहा–इदं पूष्णे न मम|

ओम् इन्द्राय स्वाहा–इदं इन्द्राय न मम|

ओम् ईश्वराय स्वाहा–इदं ईश्वराय न मम| ( ततश्चतुर्गृहीताज्येन चतस्त्र आहुतयः )

२ ३ १ २३ १२ ३ २ ३ १२ ३ २उ ३ १ २ ३ १ २३ २३ १२

–ओम् सोम ँ राजानं वरुणमग्निमन्वारभामहे| आदित्यं विष्णु ँ सूर्यं ब्रह्माणंचबृहस्पतिम्||

स्वाहा–इदं अग्नये न मम|

३ २ ३ १ २३ १ २ ३ १ २र ३ १२३ १ २

–ओम् शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि|

२ ३ २ ३ १ २र ३१ २ ३२ ३ १ २

विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु|| स्वाहा–इदं पूष्णे न मम|

164

१ २ ३१ २र ३२उ ३ १ २ ३ १ २

–ओम् इन्द्रा पर्वता बृहता रथेन वामीरिष आ वहत ँ सुवीराः|

३ २ ३ १ २ ३१२ ३ १२ ३ १ २र३ १ २

वीत ँ हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया मदन्ता|| स्वाहा–इदं इन्द्राय न मम|

२ ३ १ २ ३१ २ ३ १ २र ३ २ ३ १ २

–ओम् आ वो राजानमध्वरस्य रुद्र ँ होतार ँ सत्ययज ँ रोदस्योः|

३ २ ३१ २ ३ २ ३२ ३ १ ३ १२

अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्|| स्वाहा–इदं ईश्वराय न मम|

व्याहृतिचतुष्टयहोमः|

विनियोगः– व्याहृतिनां विश्वामित्रजमदग्निभरद्वाज गायत्र्युष्णिगनुष्टुबग्निवायुसूर्याः समस्तानां प्रजापतिर्बृहती प्रजापतिः होमे विनियोगः|

ओम् भूः स्वाहा – इदं अग्नये न मम||१||

ओम् भुवः स्वाहा – इदं वायवे न मम||२||

ओम् स्वः स्वाहा – इदं सूर्याय न मम||३||

ओम् भूर्भुवः स्वः स्वाहा– इदं प्रजापत्ये न मम||४||

स्विष्टकृत्होमः|( ततः स्त्रुच्युपस्तीर्य; चोरीशानकोणात्सकृदेव बहुतरं मेक्षणेन स्त्रुचि कृत्वा; पुनद्विरभिघार्य; अवदानस्थानमनभ्यज्य )

विनियोगः– अग्नये स्विष्टकृत्मंत्रस्य परमेष्ठी यजुः स्विष्टकृत् होमे विनियोगः|

ओम् अग्नये स्विष्टकृते स्वाहा–इदं अग्नये स्विष्टकृते न मम| ( अग्नेरीशानकोणे पूर्वाहुताभिराहुतिभिरसंस्पृष्टा होतव्या )

उत्तर कुशाण्डि प्रयोगः|

व्याहृतित्रयहोमः|

विनियोगः– व्याहृतिनां विश्वामित्रजमदग्निभरद्वाज गायत्र्युष्णिगनुष्टुबग्निवायुसूर्याः समस्तानां प्रजापतिर्बृहती प्रजापतिः होमे विनियोगः|

ओम् भूः स्वाहा – इदं अग्नये न मम||१||ओम् भुवः स्वाहा – इदं वायवे न मम||२||

ओम् स्वः स्वाहा – इदं सूर्याय न मम||३||(समिधं हुत्वा;देवसवितरितिपूर्ववत्पर्युक्षणम्)



विनियोगः– देवसवितरिति परमेष्ठी प्रजापतिस्त्रिष्टुप् सविता अनुपर्युक्षणे विनियोगः|

ओम् देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय|

दिव्यो गन्धर्वः केतपूः केतं नः पुनातु वाचस्पतिर्वाचं नः स्वद्तु|| ( एवं ई>ई प्रदक्षिणमग्निं सकृत् त्रिर्वा पर्युक्षेत् )

ओम् अदितेऽन्वमँ स्थाः| ( इति प्रणीतास्थं जलं हस्तद्वयेनादाय अग्नेर्दक्षिणतः नै>अ )

ओम् अनुमतेऽन्वमँ स्थाः| ( इति पश्चात् नै>वा )

ओम् सरस्वत्यन्वमँ स्थाः| ( इति उत्तरतः वा>ई )

यज्ञवास्तुकरणम्|

( परिस्तरणसमयावशेषित बर्हिमुष्टिं दक्षिणेनादाय )

विनियोगः– प्रजापतिर्यजुर्विश्वेदेवाः बर्हिभ्यन्जने विनियोगः|

ओम् अक्तु ँ रिहाणा व्यन्तु वयः| ( इति मन्त्रेणाज्यस्थालीस्थे आज्ये; तदनवशेषे चरौ वा अग्राण्यभ्यज्य; द्विस्तूष्णीमभ्यज्य; ततो दक्षिणेन मूलदेशे वामेन संगृह्य सकृन्मन्त्रेण द्विस्तूर्ष्णीं मध्यदेशमभ्यज्य; दक्षिणेन मध्यदेशादधो गृहीत्वा; पूर्ववत्मूलदेशमभ्यज्य; सव्ये कृत्वा; दक्षिणेन प्रणीताभिर्दि्भरभ्युक्ष्य; दक्षिणेनादाय )

विनियोगः—प्रजापतिरनुष्टुब् रुद्रः बर्हि होमे विनियोगः|

ओम् यः पशूनामधिपतीरुद्रस्तन्ती चरो वृषा| पशूनस्माकं मा हि ँ सीरेतदस्तु हुतं तव

स्वाहा—इदं रुद्राय पशुपतये न मम||( उदकोपस्पर्शः )

विनियोगः— प्रजापतिर्यजुर्वसवः होमे विनियोगः|

ओम् वसुभ्यः स्वाहा—इदं वसुभ्यो न मम|( ततो वृषंवत्सरी चतुष्टय सहितमग्नेः समीपमानीय प्राड्मुखमवस्थाप्य न्यासान्कुर्यात् )

२उ३क२र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

—ओम् भूर्भुवःस्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

१ र १ र र् र २१र र २ १ १

ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियो योनः प्रचोऽ१२१२| हुम्| आऽर|

१ १११

दायो| आऽ२३४५||—इति मूर्ध्नि|



१ २ ३ १ २ ३ १ २ ३ १२ १२ ३१२

—ओम् नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः| अमैरमित्रमर्दय||

४५ र ४ ५ १ २ १ ३ ५ १ अ १ २

ओम् नमस्तौ| होग्नाइ| ओजसाऽ३इ| गृणाऽ२न्ताऽ२३४इदे| वाकृष्टयाऽरः| अमायेऽ३ः|

१ ३ ५रर २ ३ १११

आऽ२माऽ२३४औहोवा| त्रमर्द्याऽ२३४५||—इति ललाटे|

३ १ २३ १२ ३१ २र १२ ३१ २र३१ २ ३ २३ १२३ १ २

—ओम्पुनानःसोमधारयापोवसानोअर्षसि|आरत्नधायोनिमृतस्यसीदस्युत्सोदेवोहिरण्ययः||(२)

२ र र १ ५ १ र र र र र र ३ २

ओम् पुनानःसोमाऽ३धाराऽ२३४या| आपोवसानोअर्षस्यारत्नधायोनिमृतस्यसाऽ२३इदसाइ|

१ २ २ १ र र र २ १ २ २ १ २ ४५ ४

ओहाऽ३उवा| उत्सोदेवोहिराऽ२३हाइ| ओहाऽ३उवा| ण्यया| औऽ३होवा| होऽ५इ| डा||

३ २ २ ४ ५ २ ३ ५ १ २ १ ३ २ ३ ५

—पुनाऽ३१| नाऽ३ःसो| म| धाराऽ२३४या| आपोऽ३| वसाऽ२| नआऽ३४५| षाऽ२३४सी|

२र१ २ १ २र १ ३ २ ३ ५ २ १ ३ २

आरात्नधाः| यो| निमृताऽ२| स्यसाऽ३४५इ| दाऽ२३४सी| उत्साऽरः| दाइवोऽ२| हिराऽ३४५|

३ ५

ण्याऽ२३४याः||—इति नेत्रयोः|

१ २र ३ १ २र ३१ २ २ ३ १ २ ३ १ २३ २३ २उ ३ १ २

—ओम् त्वामिद्धिहवामहेसातौ वाजस्य कारवः|त्वांवृत्रेष्विन्द्रसत्पतिंनरस्त्वांकाष्ठास्वर्वतः||

२र र र र २ र१र र २ ३ ५ १ २ ३र४र ५

ओम् औहोइत्वामिद्धिहवामहाऽ३ए| सातौवाजा| स्याकाराऽ२३४वाः| तुवाऽ३४| औहोवा|

२१ २ २ ३ ५ १र र २ ३र४र ५ १ १

वृत्राइषुवाइ| द्रासाऽ३१त्| पतिन्नाऽ२३४राः| त्वांकाष्ठाऽ३४| औहोवा|सूऽरआर्वाऽ२३४|ताः|

५ ५

उहुवाऽ६हाउ| वा| हस्||

167

२३ २ ३१ २ ३१ २

—ओम् अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः|

१२ ३ १ २र ३ २३ १ २ ३ १ २

ईशानमस्य जगतः स्वर्दशमीशानमिन्द्र तस्थुषः||

२ र र र १ २र र रर १ २

ओम् आभित्वाशूरनोनुमोवा| आदुग्धाइवधेनवईशानमस्यजगतः| सुवाऽ२३र्द्दशाम्|
१ र२ १ ४ १ र र५ ५ १
आइशानमाऽ२३इन्द्राऽ३| तास्थूऽ२३४षा| ओवाऽ६| हाउवा| अस्||–इति कर्णयोः|
३१२ ३ २ ३ २ ३ १२ ३१ २ ३१ २ ३ १२
–ओम् अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम|
२ ३ १ २ ३ २उ ३ १२ ३२उ ३१२ ३१ २
यो मा ददाति स इदेवमावदहमन्नमन्नमदन्तमद्मि||
२र १रर २ १ र२र१र र२ २र
ओम् हाउ|(३) सेतूँ स्तर|(३) दुस्त| रान्|(३) दानेनादानम्|(३) हाउ|(३)
र १ २ १११ २र १रर २ १

अहमस्मिप्रथमजाऋताऽ२३स्याऽ३४५| हाउ|(३) सेतूँ स्तर|(३) दुस्त| रान्|(३)
र२र१ र२ १ र२र१ र २र र र र र १ २ १११२र १रर २
अक्रोधेनक्रोधम्|(२) अक्रोधेनक्रोधम्|हाउ|(३)पूर्वन्देवेभ्योअमृतस्यनाऽ२३माऽ३४५|हाउ|(३)सेतूँस्तर|(३)
१ २१ र २र २र र र र र १ २ १११ २र
दुस्त| रान्|(३) श्रद्धयाश्रद्धाम्|(३) हाउ|(३) योमाददातिसइदेवमाऽ२३वाऽ३४५त्| हाउ|(३)
१रर २ १ २१र र २ २र १ २
सेतूँ स्तर|(३) दुस्त| रान्|(३)सत्येनानृतम्|(३)हाउ|(३)अहमन्नमन्नमदन्तमाऽ२३द्मीऽ३४५|
२र र१र २र१२१ १ २ १र २
हाउ|(३) एषागतिः|(३) एतदमृतम्|(३) स्वर्गच्छ|(३) ज्योतिर्गच्छ|(३)
१रर २र १र२१ ११११
सेतूँ स्तीर्त्वाचतुराऽ२३४५ः||
–इति मुखे|



१ २ १ २ १ २ १ २ १ २ १
–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|

२ १ र२ १र रर२ १र २१र २१२र१ २र १र२१रर२र १ २रर

मन्युनावृत्रहासूर्येणस्वराडयज्ञेनमघवादक्षिणास्यप्रियातनूराज्ञाविशंदाधार|

१ र२१र २ र१ २१ र१ २ १र २ १र र २र१

वृषभस्त्वष्टावृत्रेणशचीपतिरन्नेगयःपृथिव्यासृणिकोग्निनाविश्वंभूतम|

२ र र१ र र २१र २ र र१रर २१र र र२ र १र २र र१र

भ्यभवोवायुनाविश्वाःप्रजाअभ्यपवथावषट्कारेणार्द्धभाक्सोमेनसोमपाःसमित्यापरमेष्ठी|

१रर२ररर १२ १ र र२रर रर१र२र१२ १रर२रर र १२

येदेवादेवाः| दिविषदः| स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| अन्तरिक्षसदः|

१ र र२रर रर१र२र१२ १रर२रर र र १२ १ र र२रर रर१र२र१२

स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| पृथिवीषदः| स्थतेभ्योवोदेवादेवेभ्योनमः|

१रर२ररर १२ १ र र२रर रर१र२र१२ १रर२रर र १२

येदेवादेवाः| अप्सुषदः| स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| दिक्षुसदः|

१ र र२रर रर१र२र१२ १रर२रर र र र १२ १ र र२रर रर१र२र१२

स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| आशासदः| स्थतेभ्योवोदेवादेवेभ्योनमः|

१२ १र २१ २र १ र२१ २र १ र २ १ २ १ २ १ २ १ र

अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा|यइदंविश्वंभूतम्|

२ १ ५

युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||

१ २ १ २ १ २ १ २ १ २ १

–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|

२ १ २र र१र २ १ र२र १ २र र१ २ १ र २

नमउत्ततिभ्यश्चोत्तन्वानेभ्यश्चनमोनीषंगिभ्यश्चोपवीतिभ्यश्चनमोस्यद्भ्यश्चप्र|

१ र२र १ २१ २ र १ २१ २ १ २ र १ २१ २

तिदधानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्चनमःत्सरद्भ्यत्सारिभ्यश्चनमःश्रि|

१र २ र १ २ १ २ १ २ र १ २ १ र२१र २ १र२१ २१र२१ २र

तेभ्यश्चश्रायिभ्यश्चनमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्चनमोयतेचवियतेचनमःपथेचविपथायच|

१२ १र २१ २र१ र२ १ २र १ र २ १ २ १ २ १ २ १ र

अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|

२ १ ५

युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||

१ २ १ २ १ २ १ २ १ २ १

–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|

र र २१र २ र र१र २र र १र २ १२र१

नमोन्नायनमोन्नपतयएकाक्षायचावपन्नादायचनमोनमः|

२१र २र १२र१ २१र २१ २ र१२ १ २ र १ र२ १२ १ २ र

रुद्रायतीरसदेनमःस्थिरायस्थिरधन्वनेनमःप्रतिपदायचपटरिणेचनमस्त्रियम्बकायचक|

१ र२ १ २र र१र २ र र १र २ १ २१र २ १र २ १ २ १र२ १२र

पर्दिनेचनमआश्रायेभ्यश्चप्रत्याश्रायेभ्यश्चनमःक्रव्येभ्यश्चविरिम्फेभ्यश्चनमःसंवृतेचविवृतेच|

१२ १र २१ २र१ र२ १ २र १ र २ १ २ १ २ १ २ १ र

अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|

२ १ ५

युयोऽ३आउ। वाऽ२३। नाऽ२३४माः॥–इति कंठे।

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२
ओम् कयानश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता॥

170

३ र ४ २ ४र५ १ र २१र २ १ २ र २
ओम् काऽ५या। नश्चाऽ३इत्राऽ३आभुवात्। ऊ। तीसदावृधःस। खा। औऽ३होहाइ।
१ २ ३ र२ १ १ २
कयाऽ२३शचाइ। ष्ठयौहोऽ३। हुम्माऽर। वाऽ२र्तोऽ३५हाइ॥
१ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २३ २३ १२
कसत्वा सत्यो मदानां मँ हिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु॥
३ र ४ २ ४र५ १ २र१ र २ १ २ र२
काऽ५स्त्वा। सत्योऽ३माऽ३दानाम्। मा। हिष्ठोमात्सादन्ध। सा। औऽ३होहाइ।
१ २ ३ र २ १ १ २
दृढाऽ२३चिदा। रुजौहोऽ३। हुम्माऽर। वाऽ२सोऽ३५हाइ॥
३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२
अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतये॥
३ र ४ २ ४र ५ १ २र१ २र १ २ र २
आऽ५भी। षुणाऽ३ःसाऽ३खीनाम्। आ। विताजराइतॄ। णाम्। औऽ२३होहाइ।
१ २ ३ र २ १ १ २
शताऽ२३म्भवा। सियौहोऽ३। हुम्माऽर। ताऽ२योऽ३५हाइ॥३॥
१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२
ओम् कयानश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता॥
१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२

कस्त्वा सत्यो मदानां मँ हिष्ठो मत्सदन्धसः| दृढा चिदारुजे वसु||
३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२
अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||
३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२
ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|
३ २ ३ २ ३ १ २ ३ २ ३ २३ १२ ३ २ ३२३ १ २
स्वस्ति नस्ताक्ष्यी अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|ओम् स्वस्तिनोबृहस्पतिर्दधातु||
–इति कंबले|

171

२ ३ १ २ ३ १२ ३ १ २र ३१ २३ २ ३ २
ओम् इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः|
२ ३ १२ ३ १२ ३ २ ३ १ २र ३१ २३ १ २
शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः||(२)
२र १ २ र २१ २ १ २र३४ ५ २ १र
–ओम्हाउ|(३) हँ हँ हँ हँ|(३) हाउ|(३) इन्द्रन्नरो| नेऽ३मधि|ताहवन्ताइ|यत्पारियाः|
२१ २ ३४ ५ २र१र २ १ २ ३ ४र५ २र१र २१र २र३ ४५
युनज| ताइधियस्ताः| शूरोनृषा| ताऽ३श्रव| सश्चकामाइ| आगोमताइ| व्रजेभ| जातुवन्नाः|
२र १ २ र १११
़हाउ|(३) हँ हँ हँ हँ|(३) हाउ|(३) वाऽ३| ईऽ२३४५||
२र १ २ र २१ २ १ २र३४ ५ २ १र
–हाउ|(३) इहा| हँ हँ हँ|(३) हाउ|(३) इन्द्रन्नरो| नेऽ३मधि| ताहवन्ताइ| यत्पारियाः|
२१ २ ३४ ५ २र१र २ १ २ ३ ४र५ २र१र २१र २र३ ४५
युनज| ताइधियस्ताः| शूरोनृषा| ताऽ३श्रव| सश्चकामाइ| आगोमताइ| व्रजेभ| जातुवन्नाः|
२र १ २ र १११
़हाउ|(३) इहा| हँ हँ हँ|(३) हाउ|(३) वाऽ३| ईऽ२३४५||–इति स्कंधयोः|

२ ३ १ २ ३१२ ३ २ ३ १ २ १ २र ३ १ २

ओम् अग्न आयाहि वीतये गृणानो हव्य दातये| निहोता सत्सि बर्हिषि||

४ २रर १ १ १ र२र १ १

–ओम् ओग्नाइ| आयाहिऽ३वोइतोयाऽरइ| तोयाऽ2इ| गृणानोह| व्यदातोयाऽ२इ|तोयाऽ2इ|

१ २र१ १ ३ ५रर ३ ५

नाइहोतासाऽ२३| त्साऽरइबाऽ२३४औहोवा| हीऽ२३४षी||–इति ऊरुमध्ये|

२उ ३१२ ३ २ ३ २ ३ १२ ३२ ३ २ ३ १ २३ २३ १ २ ३ १ २

–ओम् यद्वर्चोहिरण्यस्य यद्वा वर्चो गवामुत| सत्यस्य ब्रह्मणो वर्चस्तेन मा सँसृजामसि||

172

२र १ र२ १ २ १ र २ १ २र २र

–ओम्हाउ|(३) मनोजयित्|(३) हृदयमजयित्|(३) इन्द्रोजयित्|(३) अहमजैषम्|(३)हाउ|(३)

१ २र१ २ १ २र१२र१ र२ १ २ १ २ १ २र१ र र २र१ २र १

यद्वर्चोहिरण्य| स्या| यद्वावर्चोगवामु| ता| सत्यस्यब्रह्मणोव| चाः| तेनमासँ सृजाम| साइ|

२र १ र२ १ २ १ र २ १ २र २र

हाउ|(३) मनोजयित्|(३) हृदयमजयित्|(३) इन्द्रोजयित्|(३) अहमजैषम्|(३) हाउ|(३) वा|

र १ र २ १ २ १ र २ १ २र र १ र ३ १११

ए| मनोजयिद्हृदयमजयिदिन्द्रोजयिदहमजैषम्|(३) ए| अहँ सुवर्ज्योतीऽ२३४५ः||

–इति हृदये|

१ २ ३ १ २ ३ १ २र ३१२

ओम् आ जुहोता हविषा मर्जयध्वं नि होतारं गृहपतिं दधिध्वम्|

३२ ३ १ २र ३१२ ३ १ २ ३ २३क२र

इडस्पदे नमसा रातहव्यँ सपर्यता यजतं पस्त्यानाम्||

४र५ र ४ २१ र १ १ र र १

—ओम् आजुहोता| हविषामर्जयाऽरध्वाउवाऽर| निहोतारंगृहपतिन्दधाऽरइध्वाउवाऽ२३४|
३२ ३ २ १ र र२१ १ २ १ २१ ४ ५ ४ ५
इडाऽ३४स्पदाइ|नमसारातहाव्याऽरम्| सापर्यता| याजतंपाऽ२३| स्तियोवा|आऽ५नोऽ६हाइ||

—इति नाभौ|

१ २ ३ १ २र ३२३ १ २ २उ ३ २ ३ १ २
—ओम् तद्वो गाय सुते सचा पुरुहूताय सत्वने| शं यद्गवे न शाकिने||(४)
५ र४ ५ १ ३ २ ३ ५ १ २रर १ २ १
—ओम् तद्वौहोवा| गायाऽ२| सुताइसाऽ२३४चा| पुरुहूता| यसात्वाऽ१नाऽरइ| शंयत्| हा|
२ २ ३ ५ १ ३ ५रर २ १ १११
औऽ३होइ| गाऽ२३४वाइ| नाऽ२शाऽ२३४औहोवा| एऽ३| किनेऽ२३४५||२||

173

५ र र २ १ र२ ३र२ १ २ ३ ५
—ओम् तद्वोगाया| सुताइसचाऽ३| पूरुऽ२३हूताऽ३४| हाहोऽ३| यासत्वाऽ२३४नाइ|
२१ २ १ ५ ४ ५
शंयद्गाऽ२३वे| नशौऽर| हौऽर| हुवोऽ२३४| वा| काऽ५इनोऽ६हाइ||३||
५ र र र ५ २ र१र २र १ २रर १ ७ २ ५
—ओम् तद्वोगायसुतेसचाऽ६ए| पुरुहूतायसत्वने| पुरुहूता| यासत्वाऽ२३नाऽ३४इ| शंयत्|
२ ३ ५ १ ४ २ ५
गौवाओऽ२३४वा| नाऽ२३शाऽ३| काऽ३४५इनोऽ६हाइ||४||
५ र र र ५ २ र१र २ २
—ओम् तद्वोगायसुतेसचाऽ६ए| पुरुहूतायसत्वनाइ| शंयद्गाऽ२३वे| ऐऽरहोऽ१आऽ२३इही|

१ १ ३ ५र र ३ १११

नशाऽ२३| काऽ२इनाऽ२३४औहोवा| ईऽ२३४५||५|| –इति जान्वोः|

३१ २ ३ १ २ ३ १ २ ३ १२

–ओम् पुरोजिती वो अन्धसः सुताय मादवित्नवे|

२३ १ २ ३ १ २ ३क २र

अपश्वान ँ अथिष्टन सखायो दीर्घजिह्वयम्||(२)

३ २ २ ४ र ५ २ ४ ५ १ र र २ १ १र

–ओम् पुरोऽ३१| जीऽ३ती| वोअ| धाऽ३सः|एहिया| सू| तायमादा| यि| त्नवाऽरइ|एहियाऽर|

१र २ ४ ५ २र १र र१र २ ४

अपस्वाना ँ श्नाऽ३थीऽ३| ष्टाऽ२३४ना| ऐहाऽरइ| एहियाऽर| सखायोदाइर्घाऽ३जीऽ३|

२ ५

ह्वाऽ३४५योऽ६हाइ||

५ र र ५ २१र र १ १ र र २

–पुरोजितीवोऽ४न्धासाः| सुताय| मादाऽ२३या| हुम्माऽर१२| त्नवेअपश्वान ँ श्नथिष्टन|

१ २ २ १ २ १ ४५ ४

साखाऽ३उवा| योऽरदी| घाऽ२३जी| ह्वियाम्| औऽ२३होवा| होऽ५इ| डा||–इति ऊर्वोः|

174

२ ३ २ ३१ २ ३१ २ ३ १ २ ३ १ २र३ १२

ओम् उदु त्यं जातवेदसं देवं वहन्ति केतवः| द्दशे विश्वाय सूर्यम्||

४५ ४ १ अ ३ ५ २र१ २ ३ ५

–ओम् उदुत्यम्| ओहाइ| जा| तवेऽ२दाऽ२३४साम्| देवंवहा| तीकेताऽ२३४वाः|

१ र५ १ २र १र ४ ५ ४

दाऽ२३४शेहाइ| वाइश्वायसू| र्याम्| औऽ२३होवा| होऽ५इ| डा||–इति जंघयोः|

३ २ ३ १२ ३ १ २ ३ १ २ ३ १ २ ३ १ २

–ओम् पावका नः सरस्वती वाजेभिर्वा जिनीवती| यज्ञं वष्टु धियावसुः||
५र र ४ ५ २ १ २ १ र २ र १ २ १
–ओम् पावकानईया| सरास्वाऽ१तीऽर| वाजेभिर्वा| जिनाइवाऽ१तीऽर| यज्ञाऽ२३म्|
१ ३ ५रर २ १र ३ १११
वाऽ२ष्टूऽ२३४औहोवा| धियावसूऽ२३४५ः||–इति पुच्छे|
१ २ ३ २उ ३ २ ३ २ ३ १ २३ १ २र
–ओम् ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जानन्|
१ २ ३ २३क२र ३ २ ३ १२ ३ १ २र३ १ २
ता जानती रभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः||
२र र र र र र र र र र र र र
–ओम् हाउ|(३) गावोहाउ|(३) वृषभपत्नीर्हाउ|(३) वैराजपत्नीर्हाउ|(३) विश्वरूपाहाउ|(३)
र र १र र १ र १
अस्मासुरमध्वँ हाउ|(३) तेमन्वतप्रथमन्नामगोऽरनाम्| त्रिःसप्तपरमन्नामजाऽरनान्|
र र र र १ २र १ २ र र १ २र र रर
ताजानतीरभ्यनूषताऽरक्षाः| आविर्भुवन्नरुणीर्यशसागाऽरवाः| हाउ|(३) गावोहाउ|(३)
र र रर र र र र र र र
वृषभपत्नीर्हाउ|(३) वैराजपत्नीर्हाउ|(३) विश्वरूपाहाउ|(३) अस्मासुरमध्वँ हाउ|(२)
र र र १र र २१ २र रर १ २र १ र२र १र २
अस्मासुरमध्वँ हाउ| वा| ए| गावोवृषभपत्नीर्वैराजपत्नीर्विश्वरूपाअस्मासुरमध्वम्|(२)
र १र र २१ २र रर १ २र १ र२र १र २ ३ १११
ए| गावोवृषभपत्नीर्वैराजपत्नीर्विश्वरूपाअस्मासुरमध्वाऽ२३४५म्||–इति रोमकूपेषु|



१ २र ३ १ २ ३ २ ३ १ २र ३ १ २र
–ओम् आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभँ सं गृभाय| महाहस्ती दक्षिणेन||(४)
५र र २१ २ १ २र१ २ १ १ २र ३ ५

–ओम् आतूनआ| द्रक्षुमाऽ२३न्ताम्| चाइत्रंग्राभाऽ२३ँहाइ|संगृऽरभाया|महाहस्तोऽ२३४हाइ|
१ १ १ ३ ५रर १ २ १ १११
दक्षाऽरइणाइना| महाऽ२३| हाऽ२स्ताऽ२३४औहोवा| दक्षिणेऽ३नाऽ२३४५||
५र र ४ ५ १ ३ ५ २ ३ ५ ६ २
–आतूनइन्द्रक्षुमान्ताम्| चित्राऽ२ङ्ग्राऽ२३४भाम्| संगृभाऽ२३४या| माऽ३हाऽ३|
१ ३ ५रर १ २ र३ १११
हाऽ२स्ताऽ२३४औहोवा| दक्षिणेनाऽ२३४५||
४र र५४ ५ ५ २१ र १ २ १ र २ २
–आतूनइ| द्रक्षुमाऽ६न्ताम्| चित्रंग्राभँसंगृभाऽरया| चित्रंग्राभँ सम्| गृ| औऽ३होइ|
३ ५ २र१ र र १ २र१ ३रर ५ ४ ५
भाऽ२३४या| ऐहोइ| महाहस्तीदक्षाऽ२३होइ| औहो| वाहोऽ२३४वा| णाऽ५इनोऽहाइ||
५र र ५ २ १ र र २ १ र २ ५
–आतूनइन्द्रक्षुमाऽ६न्ताम्| चित्रंग्राभँसंगृभाया| चित्रंग्राभँ सम्| गृऽ२३| ईऽ३४हा|
३ ५ २र१ र र १ २र१ ३रर ५ ४ ५
भाऽ२३४या| ऐहोइ| महाहस्तीदक्षाऽ२३होइ| औहो| वाहोऽ२३४वा| णाऽ५इनोऽहाइ||

–इति गुदे|

*राक्षोघ्नानि|

२ ३ १ २ ३ १ २ ३ १२ ३२ १२ ३१ २
ओम् अग्ने रक्षा णो अँ हसः प्रति स्म देव रीषतः| तपिष्ठैरजरो दह||
५ र २ ४र५र४ ५ १ र२ १ २ १ २
ओम् अग्नेराऽ३क्षाणोअँ हसाः| प्रतिस्मदेवरिषाऽ२३ताः| तपाइष्ठाऽ२३इरा|
१र २ १
जरोदाऽ२३हाऽ३४३| ओऽ२३४५इ| डा||



१ २ ३ १ २र ३ १२ २३ १२ ३१ २

ओम् अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः| अरं वहन्त्याशवः||

५ र २ ४र५४र ५ १ र र र२१र २ १ २

ओम् अग्नेयूऽ३ङ्क्ष्वाहियेतवा| अश्वासोदेवसाधाऽ२३वाः| अरंवाऽ२३हा|

१र २ १

तियाशाऽ२३वाऽ३४३ः| ओऽ२३४५इ| डा||

२ ३ १ २ ३ १ २ ३ १ २ ३ १२

—ओम् अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः|

१२ ३ १ २ ३२ ३ १ २ ३ २

अप्रोषिवान् गृहपते महाँ असि दिवस्पायुर्दुरोणयुः||(२)

४५र४ ५ ४ ५ र ४ ५ २ र१रविर १२ १ २

—ओम् अग्नेजरितर्विश्पतिः|औहोवा| एहिया| हाउ| तपानोदेऽ२वरक्षसः| अप्रोषाऽ१इवाऽरन्|

१ २ १ २ ३ ५ १ २ ३ ५ २ २ ४

गार्हपताऽ३इ| माहाँ आऽ२३४सी| दिवाः| पायौवाओऽ२३४वा| हाऽ३हाइ| दुरोऽ५णयूः|

४

होऽ५इ| डा||

३४र३ ४५ ३ २ १ र र५र ४५ १ र र र १ २ २

—अग्नेजरितर्वि| श्पतिऽ३ः| ताऽ२३४| पानोदेवर| क्षसाः| तापानोदेवरक्षसो| अप्रोषीऽ३वान्|

१२ १ २ ३ ५ ३ ५ ३२ ३ २र १ १११ ३ ५ ३ २

गृहपताइ| माहाँ आऽ२३४सी| ओऽ४हा| हहाइ| दिवस्पायूऽ२३४५ः| ओऽ४हा| हहाइ|

३ र२ १ १११ ३ ५ ३ २ १

दुरोणयूऽ२३४५ः| ओऽ४हा| हहाऽ३४३इ| ओऽ२३४५इ| डा||

३ १२ ३२ ३ २ ३ १२ ३ १२

ओम् सनादग्ने मृणासि यातुधानान्न त्वा रक्षाँ सि पृतनाशु जिग्युः|

१२ ३१ २ ३ २ ३ १ २ ३ १ २ ३ १ २

अनु दह सहमूरान्कयादो मा ते हेत्वा मुक्षत दैव्यायाः||

177

३ २ २ १र २ १ २ ३४ ५ २ १र २ १

ओम् अहा| वोऽ३हा|(२) सनादग्नाइ| मृणसि| यातुधानान्| नत्वारक्षा| सीऽ३पृत|

२ ३ ४ ५ २ १ २१ र २ ३ ४ ५ ३ २ २ र १ २र २ १

नासुजिग्यूः| अनुदहा| सहमू| रान्कयादाः| अहा| वोऽ३हा|(२) माताइहेत्याः| मुक्षत|

२ २ ४

दाऽ३४३इ| वीऽ३याऽ५याऽ६५६ः||

१ २ ३ १ २३ १२ ३ २ ३ २३ १ २ ३ १२ ३२ ३ २३क२र ३क२र

ओम् प्रत्यग्ने हरसा हरः श्रृणाहि विश्वतस्परि| यातुधानस्य रक्षसो बलं न्युब्ज वीर्यम्||

३ ४ ५र २ ३४ र ५ ५ २१र२ ३ २ ३ ५

ओम् प्रत्यग्ने| होइ| हरसाहराऽ६ए| शृणाहिवाऽ२इ| श्वताऽ३४५ः| पाऽ२३४री|

२र १र २ १ २र १ २ १ २ १ ५ ३ ५

यातुधानस्यरक्षसोऽ३| बाऽ२३लाम्| नियुब्जवोऽ२३४वा| रीऽ२३४याम्||

१ २ ३ १ २३ २ १ २ ३ १२ ३ १२ ३१२

ओम् ईडिष्वा हि प्रतीव्या ँ३ यजस्व जातवेदसम्| चरिष्णुधूममगृभीतशोचिषम्||

२र१ ४ ५र १ २ १ २३र२ १ २ ३ २ ३ ५३ २

ओम् ईडाष्वाऽ२३हिप्रतीवियाम्| याजस्वजा| तवेदसाऽ२३म्| चरिष्णुधू|माऽ२३४म|गृभाऽ३इ|

१ ३ ५रर ३ ५

ताऽ२शोऽ२३४औहोवा| चीऽ२३४षाम्||

३क २र३ २ १ २ २ ३ २३ १ २ ३१ २

ओम् श्रुष्टयग्ने नवस्य मे स्तोमस्य वीर विश्पते| नि मायिनस्तपसा रक्षसो दह||

५र र र २र१ २ १ २ १ २ ५ररर ४५ २ र १

ओम् हाउश्रुष्टयग्नेनवस्यमेहाउ| स्तोमास्यवाइ| रविश्पतायेऽ३४| ऐहीहाउहोवा|निमायिनाः|

२१२र १    ५रर र  ४ ५ १         ५ररर   ४५  २       ५     ५ ४

तपसाराऽ२३४|ऐहीहाउहोवा|क्षासाऽ२३४ः| ऐहीहाउहोवा| दहएऽ३४| हियाऽ६हा|होऽ५इ|डा||

३क २र ३ १ २  ३ १   २र३  १२   ३२  २उ  ३ २उ   ३ १ २

ओम् यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे| विश्वेदग्निः प्रति रक्षाँ सि सेधति||

178

२१र      ४ ५          १र२र१ २र  १र            २    १२१२र

ओम् यद्वाऊऽ२३विश्पतिःशिताः| सुप्रीतोमनुषोविशे| विश्वाइदाऽ२३ग्नीः| प्रतिरक्षा|

३ र २१  २   ४ ५  ४

सिसेधता| औऽ३होवा| होऽ५इ| डा|| –इति पादेषु|

*    *    *    *    *

२  ३ १ २   ३१ २ ३ १   २र    ३ २ ३  १ २

–ओम् आ वो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः|

३  २ ३१  २  ३ २ ३२ ३  १     ३ १२

अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्||

४र५र र४   ३२३  २ ३४ ५   १  २र  १   २           २३ ४ ५ २ १

–ओम् आवोराजा| नमध्व| रस्यरुद्राम्| हो| ता| राम्| स| त्ययजाऽ३म्|रोदसीयोः|अग्निंपु|

२  ३   २ ३४ ५    १  २  १  २   १   २        २   ४

रा| तनयि| त्नोरचित्तात्| हिरण्य| रू| पाऽ३मव| साऽ३४३इ| काऽ३र्णूऽ५ध्वाऽ६५६म्||१||

–इति हृदयं|

१ २      ३ १  २र    ३२३  १ २   २उ    ३ २  ३ १ २

–ओम् तद्वो गाय सुते सचा पुरुहूताय सत्वने| शं यद्गवे न शाकिने||(४)

५ र४ ५  १       ३ २  ३     ५  १  २रर   १  २         १

–ओम् तद्वौहोवा| गायाऽ२| सुताइसाऽ२३४चा| पुरुहूता| यसात्वाऽ१नाऽरइ| शंयत्| हा|

२   २    ३     ५    १  ३      ५रर    २    १     १११

औऽ३होइ| गाऽ२३४वाइ| नाऽ२शाऽ२३४औहोवा| एऽ३| किनेऽ२३४५||२||

५ र र २ १ र२ ३र२ १ २ ३ ५

–ओम् तद्वोगाया| सुताइसचाऽ३| पूरुऽ२३हूताऽ३४| हाहोऽ३| यासत्वाऽ२३४नाइ|

२१ २ १ ५ ४ ५

शंयद्गाऽ२३वे| नशौऽर| हौऽर| हुवोऽ२३४| वा| काऽ५इनोऽ६हाइ||३||

५ र र र ५ २ र१र २र १ २रर १ ७ २ ५

–ओम् तद्वोगायसुतेसचाऽ६ए| पुरुहूतायसत्वने| पुरुहूता| यासत्वाऽ२३नाऽ३४इ| शंयत्|

२ ३ ५ १ ४ २ ५

गौवाओऽ२३४वा| नाऽ२३शाऽ३| काऽ३४५इनोऽ६हाइ||४||

५ र र र ५ २ र१र २ २

–ओम् तद्वोगायसुतेसचाऽ६ए| पुरुहूतायसत्वनाइ| शंयद्गाऽ२३वे| ऐऽरहोऽ१आऽ२३इही|

१ १ ३ ५र र ३ १११

नशाऽ२३| काऽ२इनाऽ२३४औहोवा| ईऽ२३४५||५||–इति शिरसि|

३१ २ ३ १ २३ १ २ ३ १ २ ३२ ३२उ ३२ ३ २

ओम् मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्|

३ २ ३ २३ १ २ ३ १ २ ३२ ३ १ २ ३ २

कविँ सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः||(३)

२र र ३ ४र५ २र१र २ १ २ ३ ४ ५ २र१र २ १ र

–ओम्हाउ|(३) आज्यदोहम्|(३) मूर्द्धानन्दाइ| वाऽ३अर| तिंपृथिव्याः| वैश्वानराम्| ऋतआ|

२र३४ ५ २ १ २ १ २ ३४र५ २र१ २ १ २ ३४र५

जातमग्नीम्| कविँ सम्रा| जाऽ३मति| थिंजनानाम्| आसन्नःपा| त्राऽ३न्जन| यन्तदेवाः|

२र र ३४र५ २र ३ ४ २र र १ २ २र र १ ३ १११

हाउ|(३)आज्यदोहम्|(२)आज्यदोऽ५हाउ|वा| ए| आज्यदोहम्|(२)ए|आज्यदोहाऽ२३४५म्|६|

२र र १ २ २र१र २ १ २ ३ ४ ५ २र१र २ १ र

–ओम्हाउ|(३) हुम्| चिदोहम्|(३) मूर्द्धानन्दाइ| वाऽ३अर|तिंपृथिव्याः|वैश्वानराम्|ऋतआ|

२र३४ ५ २ १ २ १ २ ३ ४र५ २र१ २ १ २ ३४र५

जातमग्नीम्| कविँ सम्रा| जाऽ३मति| थिंजनानाम्| आसन्नःपा| त्राऽ३न्जन| यन्तदेवाः|

२र र १२ ६ २ १११

ॅहाउ|(३) हुम्| चिदोहम्|(२) चिदोऽ३हाउ| वाऽ३| ईऽ२३४५||७||

180

२र १ २ २र१र २ १ २ ३ ४ ५ २र१र २ १ र

–ओम्हाउ|(३) च्योहम्|(३) मूर्द्धानन्दाइ| वाऽ३अर| तिंपृथिव्याः| वैश्वानराम्| ऋतआ|

२र३४ ५ २ १ २ १ २ ३ ४र५ २र१ २ १ २ ३४र५

जातमग्नीम्| कवि ँ सम्रा| जाऽ३मति| थिंजनानाम्| आसन्नःपा| त्राऽ३न्जन| यन्तदेवाः|

२र १ २ ६ २ २ २ १

ॅहाउ|(३) च्योहम्|(२) च्योऽ३हाउ| वाऽ३| एऽ३| ऋतम्||८|| –<u>इति शिखाः</u>|

१ २ १ २ १ २ १ २ १ २ १

–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|

२ १ र२ १र रर२ १र २१र २१२र१ २र १र२१रर२र १ २रर

मन्युनावृत्रहासूर्येणस्वराडयज्ञेनमघवादक्षिणास्यप्रियातनूराज्ञाविशंदाधार|

१ र२१र २ र१ २१ र१ २ १र २ १र र २र१

वृषभस्त्वष्टावृत्रेणशचीपतिरन्नेगयःपृथिव्यासृणिकोग्निनाविश्वंभूतम|

२ र र१ र र २१र २ र र१रर २१र र र२ र १र २र र१र

भ्यभवोवायुनाविश्वाःप्रजाअभ्यपवथावषट्कारेणार्द्धभाक्सोमेनसोमपाःसमित्यापरमेष्ठी|

१रर२ररर १२ १ र र२रर रर१र२र१२ १रर२रर र १२

येदेवादेवाः| दिविषदः| स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| अन्तरिक्षसदः|

१ र र२रर रर१र२र१२ १रर२रर र र १२ १ र र२रर रर१र२र१२

स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| पृथिवीषदः| स्थतेभ्योवोदेवादेवेभ्योनमः|

१रर२ररर १२ १ र र२रर रर१र२र१२ १रर२रर र १२

येदेवादेवाः| अप्सुषदः| स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| दिक्षुसदः|

१ र र२रर रर१र२र१२ १रर२रर र र र १२ १ र र२रर रर१र२र१२

स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| आशासदः| स्थतेभ्योवोदेवादेवेभ्योनमः|
१२ १र २१ २र १ र२१ २र १ र २ १ २ १ २ १ २ १ र
अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा|यइदंविश्वंभूतम्|
२ १ ५
युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||—इति कवचं|



१ २ १ २ १ २ १ २ १ २ १
—ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|
२ १ २र र१र २ १ र२र १ २र र१ २ १ र २
नमउत्ततिभ्यश्चोत्तन्वानेभ्यश्चनमोनीषंगिभ्यश्चोपवीतिभ्यश्चनमोस्यद्भ्यश्चप्र|
१ र२र १ २१ २ र १ २१ २ १ २ र १ २१ २
तिदधानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्चनमःत्सरद्भ्यत्सारिभ्यश्चनमःश्रि|
१र २ र १ २ १ २ १ २ र १ २ १ र२१र २ १र२१ २१र२१ २र
तेभ्यश्चश्रायिभ्यश्चनमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्चनमोयतेचवियतेचनमःपथेचविपथायच|
१२ १र २१ २र१ र२ १ २र १ र २ १ २ १ २ १ २ १ र
अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|
२ १ ५
युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||—इति नेत्रं|
१ २ १ २ १ २ १ २ १ २ १
—ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|
र र २१र २ र र१र २र र १र २ १२र१
नमोन्नायनमोन्नपतयएकाक्षायचावपन्नादायचनमोनमः|
२१र २र १२र१ २१र २१ २ र१२ १ २ र १ र२ १२ १ २ र

रुद्रायतीरसदेनमःस्थिरायस्थिरधन्वनेनमःप्रतिपदायचपटरिणेचनमस्त्रियम्बकायचक|
१ र२ १ २र र१र २ र र १र २ १ २१र २ १र २ १ २ १र२ १२र
पर्दिनेचनमआश्रायेभ्यश्चप्रत्याश्रायेभ्यश्चनमःक्रव्येभ्यश्चविरिम्फेभ्यश्चनमःसंवृतेचविवृतेच|
१२ १र २१ २र१ र२ १ २र १ र २ १ २ १ २ १ २ १ र
अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|
२ १ ५
युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||–इति अस्त्रं|



–वृषन्यासाः| –ओम् अघोराय नमः–शिरसि० ओम् पशुपतये नमः–स्कंधयोः०
ओम् शर्वाय नमः–पृष्ठे० ओम् विश्वरूपाय नमः–पुच्छे० ओम् त्र्यंबकायनमः–पुच्छोपरि०
ओम् भैरवाय नमः–क्षुरे० ओम् कपर्दिने नमः–नाभौ० ओम् शूलपाणये नमः–कुक्षौ०
ओम् ईशानायनमः–श्रृंगाग्रे० ओम् नीलग्रीवायनमः–ग्रीवायाम्० ओम् महेशायनमः–सर्वांगे|

–वत्सतरीन्यासाः|–शिरसि ब्रह्मणेनमः० उदरे विष्णवेनमः० ललाटे महादेवाय नमः०
कर्णयोः अश्विभ्यांनमः० नेत्रयोः चंद्रसूर्याभ्यां नमः० पृष्ठे वैवस्वताय नमः० पादेषु
सप्तसागरेभ्यो नमः० रोमकूपेषु सप्तऋषिभ्यो नमः० सर्वांगे सर्वदेवेभ्यो नमः|

( तत स्थंडिलादैशान्यां स्थापितं कलशमादाय कलशस्थाभिद्भिः हाहुम्|३|योवा|३| इति
एक वृषेण साम्ना वृषं संस्नाप्य शेषोदकेन वत्सिकाश्च स्नापयेत् )
२उ ३ २ ३ १२३ २३ १ २ ३ १२ १ २ ३ १ २ ३ १ २ ३ २
–ओम् य एक इद्विदयते वसु मर्ताय दाशुषे| ईशानो अप्रतिष्कुत इन्द्रो अङ्ग||
१र र र र र र२र १ र२१ २१ २र१र२ १ र२ १र

ओम् हाहुम्|(३) योवा|(३) योवाहाइ|(३) यएकइद्विदयते| एकँ समैरयद्वृधे|
२१ २र र १२र १२ १ र२ १र र र२र१२ १र२र१२र१ र २ १ र २ १

वसुमर्तायदाशुषे| एकँ समैरयन्महे| ईशानोअप्रतिष्कुतः| एकोवृषाविराजति| इन्द्रोअङ्ग|
१रर र र र र२र १ ६ २ ३ १११
हाहुम्|(३) योवा|(३) योवाहाइ|(२) योवाऽ३हाउ| वाऽ३| ईऽ२३४५||
( ततस्तं वृषं अहतवासोभ्यामाछद्यतिलकाकृति सुवर्णपव्ट्टं; सत्यमित्थावृ वृषासोमा इति सामभ्यां शिरसि विन्यसेत् )
३ २ ३ १ २र ३ १२ ३ २ २३क२र ३ १ २३ २३ १२ ३ १ २३ २
–ओम् सत्यमित्थावृषेदसि वृषजूतिर्नोऽविता|वृषा ह्युग्र श्रृण्विषे परावति वृषोअर्वावतिश्रुतः||
५ ४ ५ ४र ४ १ र र १ र अ र१
ओम् सत्यामित्थावृ| षाऽ५इदसाइ| वृषजूतिर्नोविताऽर| वृषाह्युग्राश्रृण्विषाऽरइ| परावताइ|
२ १ २ १
वृषोऽ२३र्वा| वताइश्रूऽ२३ताऽ३४३ः| ओऽ२३४५इ| डा||

183

१ २ ३ १ २ ३ १२ ३ १२ १३ १ २
–ओम् वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः| वृषा धर्माणि दध्रिषे||
५ र र २ १ १ २ २ १ २३ ५ १ २
ओम् वृषासोमा| द्युमाऽरँ आसाऽरइ| वृषादेवाऽ३हाऽ३इ| वार्षव्राऽ२३४ताः| वृषाधर्माऽ३|
६ २ १ २ र १ २ १
ईऽ३या| णाइदध्रिषे| इडाऽ२३भाऽ३४३| ओऽ२३४५इ| डा||
( ततो वृषस्य वत्सतरीणां च नूपुर घंटाद्याभरणादिकं सर्वं कार्यं; ततो रक्त चंदनेन मानस्तोक इति मन्त्रं पठन् वृषस्य दक्षिणपार्श्वे त्रिशूलाकारं शलाकया कुर्यात्; वृषाह्यसीति मन्त्रेण वामपार्श्वे चक्राकारं लिखेत्; कर्म समाप्यत्यनंतरं तप्त लोहशलाकया तावेवस्पष्टौ केन चित्कारयेत् )
–ओम् मानस्तोके तनये मानआयौ मानो गोषुमानोअश्वेषुरीरिषः|

वीरान्मानो रुद्र भामिनो वधीर्हविष्मन्तः सदमित्वा हवामहे||

२३ १ २ ३ १ २ ३१ २ १२ ३१२

–ओम् वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे| पवमान स्वर्द्दशम्||

( अथाग्नि परिक्रममाणं वृषमेकां वत्सतरीमनुक्रामयेत्तां चानुक्रममाणामनामिकया स्पृष्टवा अनुमन्त्रयेन्मंत्रेण; ततः समाचारात्रिः परिणयनं )

–ओम् काम्यासि प्रियासि हव्यासि इडासि रंतासि सरस्वत्यसि मह्यसि विश्रुतिरसि|

( ततो वृषवत्सतर्योः पुच्छे तर्पणं; अग्नेः पश्चात् प्राङ्मुखौतावेव स्थाप्य )

संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य

प्रेतत्वनिवृत्यर्थं तृष्णानिवृत्यर्थं वृषवत्सतर्योः पुच्छे तर्पणमहं करिष्ये| ( सव्येन पुरुषसूक्तेनादौ प्रतिसाम तर्पणं )

( सव्यं )

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले||

१ २ ३१ २र ३ १ २ ३ १ २र २ ३ १२ ३ १२

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः| अतो धर्माणि धारयन्||

२ ३ १२ ३ १ २ ३ १२ ३२ १२ ३ २ ३ १ २

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे| इन्द्रस्य युज्यःसखा||



१ २र ३२ ३१ २र ३ १२ ३ २३ २३१ २

तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्||

१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२३२

तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते|विष्णोर्यत्परमंपदम्||

१२ ३१ २ ३ २३ १ २ ३२ ३ २उ ३ १

अतो देवा अवन्तु नोयतोविष्णुर्विचक्रमे|पृथिव्याअधिसानवि||

३१ २ ३ १२ ३ २ ३१ २ १र २र ३ १ २ ३ १ २ ३ २

सहस्त्रशीर्षाः पुरुषः सहस्त्राक्षः सहस्त्रपात्| स भूमि ँ सर्वतो वृत्वा त्यतिष्ठद्दशा ँ गुलम्||

३ २ ३२उ ३ १२३ १ २ ३ १२ ३१ २ २ ३ २३क २र ३२ ३ २

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः| तथा विष्वङ्व्यक्रामदशनानशने अभि||

१२ ३२उ ३ २ ३२उ ३ १ २ १ २ ३ १ २३ १ २ ३ १ २ ३ १२ ३ २

पुरुष एवेदँ सर्वं यद्भूतं यच्च भाव्यम्| पादोऽस्य सर्वाभूतानि त्रिपादस्या मृतं दिवि||

१ २ ३२र ३ १ २ ३ १२ ३ १२३ १ २र३१ २र ३ १२

तावानस्य महिमा ततो ज्यायाँ श्च पूरुषः|उतामृतत्वस्येशानोयदन्ने नातिरोहति||

१ २ ३ १२ ३२ ३ २ ३ १२ २३ १ २र ३२उ ३ १२ ३२

ततो विराडजायत विराजो अधि पुरुषः| सजातो अत्यरिच्यतपश्चाद्भूमिमथो पुरः||

१ २ ३ १ २३ १ २३ २ ३ १ २ ३ १ २३ २

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः|

३ १ २र३१ २र ३१ २ ३ १ २र

जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः||

१ २र ३२ ३ २ ३ १ २र३१ २ ३ १ २

किमित्ते विष्णो परिचक्षि नाम प्रयद्ववक्षे शिपिविष्टो अस्मि|

१ २र ३ १ २र ३२र१३ १२ ३ २ ३१ २

मावर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ||



१ २र३ १ २ ३२ ३१ २ ३१ २ ३२

प्रतत्ते अद्य शिपिविष्ट हव्यमर्यः शँ सामि वयुनानि विद्वान्|

१ २ ३२ ३१२ ३ १ २ ३ १ २र ३ २

तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके||

१२ ३ १ २र ३ १ २ ३ २

वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्|

१ २ ३ २३ १ २ ३ १ २ ३ २ ३ १ २

वर्धंतु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः||

१२ ३ १ २ ३ १२ ३ १ २र ३ १२ ३२

प्रथश्च यस्य सप्रथश्च नामानुष्टु भस्य हविषो हविर्यत्|

३ १ २र ३२ ३ १ २ ३१ २र ३ १२

धातुर्द्युतानात्सवितुश्च विष्णो रथंतर माजभारा वसिष्ठः||

( अपसव्यं ) ( दक्षिणाभिमुखौ भूत्वा )

–अमुकगोत्रं अमुकप्रेतं तर्पयामि| ( इति तर्पये द्वार त्रयं )

( सव्यं ) अद्येत्यादि–––तिथौ० एतं वृषं यथा शक्त्यलंकृत गंधाद्यार्चितं त्रिशूलचक्रांकितं रुद्रदैवतं ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तये

( सव्यं ) वत्सतरीणां मध्ये अहं उत्सृजामि|

–एकावत्सतरिचेत् वत्सतर्या सह उत्सृजामि| ( इति वाच्यं )

–एतं युवानं पतिं वो ददामि तेन क्रीडंतीश्चरथ प्रियेण|

मानस्तोके तनये चरी रिषो माचमुक्रृदरमभिमुंचथा|| ( इति मन्त्रेण उत्सृजेत्; ततः सामानि श्रावयेत् )

१ २ ३ २३ २ ३ १ २ ३ १ २ ३ १ २र

–ओम् उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः| वायोरनीके अस्थिरन्||

५ र १विर १ २१ अ १ २ र १ २१ अ

ओम् उपत्वाजा| मयोऽ२गि| रओइययूऽरः| दाइदिशतिर्हविष्कृ| तओइययूऽरः|

२र१र २ ३ २ ४ १ २ १र १११

वायोराऽ२३नी| कयाऽ३स्थाऽ५इराऽ६५६न्| अश्वाऽ३गावाऽ२३४५ः||



२ ३ १ २ ३ १ २र ३ १ २ ३ २ १२ ३ २३ १ २

–ओम् प्र संम्राजं चर्षणीनामिन्द्रँ स्तोता नव्यं गीर्भिः| नरं नृषाहं मँ हिष्ठम्||

४ ५ र४ १ २ २ १ २ २ १ ३ ५

—ओम् प्रसंम्राजोहाइ| चार्षाणीऽ३नाम्| आइन्द्रा ँ स्तोऽ३ताऽ३| नव्याऽ२ङ्गाऽ२३४इर्भीः|

३ २ ३ ५र३२ ४ ४

नारमोइ| नू| षाहमोऽ३इ| म ँ हाऽ५इष्ठाम्| होऽ५इ| डा||

१ २ ३ १ २ ३१ २ ३ २ ३ २३क२र ३ २

—ओम् सोमः पूषा च चेततुर्विश्वासा ँ सुक्षितीनाम्| देवत्रा रथ्योर्हिता||

५र र २१ २ ३ २ ३ ५ १ र २र र १ ३२ ३ ५

—ओम् सोमःपूषा| चचाइततुः| अयायोऽ२३४वा| वाइश्वासा ँ सुक्षिती|नाम्|अयायोऽ२३४वा|

१ अ २ ४ १रविर १ ३ १११

दाइवत्राराऽ२३| थियोऽ३र्हाऽ५इताऽ६५६| गावोऽ२अश्वाऽ२३४५ः||

१ २ ३ २उ ३ २ ३ २ ३ १ २३ १ २र

—ओम् ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जानन्|

१ २ ३ २३क२र ३ २ ३ १२ ३ १ २र३ १ २

ता जानती रभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः||

२र र र र र र र र र र र र र

—ओम् हाउ|(३) गावोहाउ|(३) वृषभपत्नीर्हाउ|(३) वैराजपत्नीर्हाउ|(३) विश्वरूपाहाउ|(३)

र र १र र १ र १

अस्मासुरमध्व ँ हाउ|(३) तेमन्वतप्रथमन्नामगोऽरनाम्| त्रिःसप्तपरमन्नामजाऽरनान्|

र र र र १ २र १ २ र र १ २र र रर

ताजानतीरभ्यनूषताऽरक्षाः| आविर्भुवन्नरुणीर्यशसागाऽरवाः| हाउ|(३) गावोहाउ|(३)

र र रर र र र र र र र

वृषभपत्नीर्हाउ|(३) वैराजपत्नीर्हाउ|(३) विश्वरूपाहाउ|(३) अस्मासुरमध्व ँ हाउ|(२)

र र र १र र २१ २र रर १ २र १ र२र १र २

अस्मासुरमध्व ँ हाउ| वा| ए| गावोवृषभपत्नीर्वैराजपत्नीर्विश्वरूपाअस्मासुरमध्वम्|(२)

र १र र २१ २र रर १ २र १ र२र १र २ ३ १११

ए| गावोवृषभपत्नीर्वैराजपत्नीर्विश्वरूपाअस्मासुरमध्वाऽ२३४५म्||

३ १ २ ३१ २ ३ १ २ ३२३ १ २ १ २ ३ १२

<u>–ओम् अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम्| होतारँ रत्नधातमम्</u>||

२ १ र२र १र २ र१र २ १र २१ २

ओम् हाउहाउहाउवा| अग्निमीडेपुरोहितम्| देवेषुनिधिमाँ अहम्| हाउहाउहाउवा|

१ २र१२ १ २र१र २ १र २१ २ १र र २ १र २

यज्ञस्यदेवमृत्विजम्| देवेषुनिधिमाँ अहम्| हाउहाउहाउवा| होतारँ रत्नधातमम्|

र१र २ १र २१ २ र र१र २ १र २१

देवेषुनिधिमाँ अहम्| हाउहाउहाउवा| <u>ए| देवेषुनिधिमाँ अहम्</u>|(३)||

१ २ ३ २उ ३ २ ३ २ ३ १ २३ १ २र

<u>–ओम् ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जानन्</u>|

१ २ ३ २३क२र ३ २ ३ १२ ३ १ २र३ १ २

<u>ता जानती रभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः</u>||

२र १र र २र १ र

–ओम् हाउ|(३) तेमन्वतप्रथमन्नामगो| नाम्|(३) हाउ|(३) त्रिःसप्तपरमन्नामजा| नान्|(३)

२र १र र र र २र र १ र र

हाउ|(३) ताजानतीरभ्यनूषता| क्षाः|(३) हाउ|(३) आविर्भुवन्नरुणीर्यशसागा| वाः|(३)

२र र १ २र र १ ३ १११

हाउ|(३) वा|(३) <u>ऐ| दुधाः</u>|(२) ऐ| दुधाऽ२३४५ः||

३१२ ३१ २ ३ २३ १ २ ३ २ ३ १ २

<u>–ओम् सहर्षभाः सहवत्सा उदेत विश्वा रूपाणि विभ्रतीद्वर्यूध्नीः</u>|

३२ ३ २३१ २ ३ २ ३ १ २र ३ २ ३१ २

<u>उरुः पृथुरयं वो अस्तु लोक इमा आपः सुप्रपाणा इह स्त</u>||

२ १२र १ २र १र २ १ र२र१र २१ २र र र

ओम् हाउहाउहाउवा| सहर्षभाःसहवत्साउदेत| हाउहाउहाउवा|विश्वारूपाणिविभ्रतीद्वर्यूध्नीः|

२ १ २ १२१ र२ र १ २ १रर २ र१र२१

हाउहाउहाउवा| उरुःपृथुरयंवोअस्तुलोकः| हाउहाउहाउवा| इमाआपःसुप्रपाणाइहस्त|

२                    १ २        १
हाउहाउहाउवा। अश्वमिष्टयेऽ३हस्॥

188

*रुद्रसंहिता।

२ ३ १ २ ३१ २ ३ १ २र ३ २ ३ १ २
–ओम् आ वो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः।
३ २ ३१ २ ३ २ ३२ ३ १ ३ १२
अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्॥

४र५र र४ ३२३ २ ३४ ५ १ २र १ २ २३ ४ ५ २ १
–ओम् आवोराजा। नमध्व। रस्यरुद्राम्। हो। ता। राम्। स। त्ययजाऽ३म्।रोदसीयोः।अग्निंपु।
२ ३ २ ३४ ५ १ २ १ २ १ २ २ ४
रा। तनयि। त्नोरचित्तात्। हिरण्य। रू। पाऽ३मव। साऽ३४३इ। काऽ३र्णूऽ५ध्वाऽ६५६म्॥१॥

१ २ ३ १ २र ३२३ १ २ २उ ३ २ ३ १ २
–ओम् तद्वो गाय सुते सचा पुरुहूताय सत्वने। शं यद्गवे न शाकिने॥(४)

५ र४ ५ १ ३ २ ३ ५ १ २रर १ २ १
–ओम् तद्वौहोवा। गायाऽ२। सुताइसाऽ२३४चा। पुरुहूता। यसात्वाऽ१नाऽरइ। शंयत्। हा।
२ २ ३ ५ १ ३ ५रर २ १ १११
औऽ३होइ। गाऽ२३४वाइ। नाऽ२शाऽ२३४औहोवा। एऽ३। किनेऽ२३४५॥२॥

५ र र २ १ र२ ३र२ १ २ ३ ५
–ओम् तद्वोगाया। सुताइसचाऽ३। पूरुऽ२३हूताऽ३४। हाहोऽ३। यासत्वाऽ२३४नाइ।
२१ २ १ ५ ४ ५
शंयद्गाऽ२३वे। नशौऽर। हौऽर। हुवोऽ२३४। वा। काऽ५इनोऽ६हाइ॥३॥

५ र र र ५ २ र१र २र १ २रर १ ७ २ ५
–ओम् तद्वोगायसुतेसचाऽ६ए। पुरुहूतायसत्वने। पुरुहूता। यासत्वाऽ२३नाऽ३४इ। शंयत्।
२ ३ ५ १ ४ २ ५

गौवाओऽ२३४वा| नाऽ२३शाऽ३| काऽ३४५इनोऽ६हाइ||४||
५ र र र ५ २ र१र २ २
–ओम् तद्वोगायसुतेसचाऽ६ए| पुरुहूतायसत्वनाइ| शंयद्गाऽ२३वे| ऐऽरहोऽ१आऽ२३इही|
१ १ ३ ५र र ३ १११
नशाऽ२३| काऽ२इनाऽ२३४औहोवा| ईऽ२३४५||५||

189

३१२ ३ १ २३ १ २ ३ १ २ ३२ ३२उ ३२ ३ २
–ओम् मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम्|
३ २ ३ २३ १ २ ३ १ २ ३२ ३ १ २ ३ २
कविँ सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः||(३)
२र र ३ ४र५ २र१र २ १ २ ३ ४ ५ २र१र २ १ र
–ओम्हाउ|(३) आज्यदोहम्|(३) मूर्द्धानन्दाइ| वाऽ३अर| तिंपृथिव्याः| वैश्वानराम्| ऋतआ|
२र३४ ५ २ १ २ १ २ ३४र५ २र१ २ १ २ ३४र५
जातमग्नीम्| कविँ सम्रा| जाऽ३मति| थिंजनानाम्| आसन्नःपा| त्राऽ३न्जन| यन्तदेवाः|
२र र ३४र५ २र ३ ४ २र र १ २ २र र १ ३ १११
हाउ|(३)आज्यदोहम्|(२)आज्यदोऽ५हाउ|वा| ए| आज्यदोहम्|(२)ए|आज्यदोहाऽ२३४५म्|६|
२र र १ २ २र१र २ १ २ ३ ४ ५ २र१र २ १ र
–ओम्हाउ|(३) हुम्| चिदोहम्|(३) मूर्द्धानन्दाइ| वाऽ३अर|तिंपृथिव्याः|वैश्वानराम्|ऋतआ|
२र३४ ५ २ १ २ १ २ ३ ४र५ २र१ २ १ २ ३४र५
जातमग्नीम्| कविँ सम्रा| जाऽ३मति| थिंजनानाम्| आसन्नःपा| त्राऽ३न्जन| यन्तदेवाः|
२र र १२ ६ २ १११
हाउ|(३) हुम्| चिदोहम्|(२) चिदोऽ३हाउ| वाऽ३| ईऽ२३४५||७||
२र १ २ २र१र २ १ २ ३ ४ ५ २र१र २ १ र
–ओम्हाउ|(३) च्योहम्|(३) मूर्द्धानन्दाइ| वाऽ३अर| तिंपृथिव्याः| वैश्वानराम्| ऋतआ|
२र३४ ५ २ १ २ १ २ ३ ४र५ २र१ २ १ २ ३४र५

जातमग्नीम्| कविँ सम्रा| जाऽ३मति| थिंजनानाम्| आसन्नःपा| त्राऽ३न्जन| यन्तदेवाः|
२र १ २ ६ २ २ २ १
्हाउ|(३) च्योहम्|(२) च्योऽ३हाउ| वाऽ३| एऽ३| ऋतम्||८||

190

१ २ १ २ १ २ १ २ १ २ १
–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|
२ १ र२ १र रर२ १र २१र २१२र१ २र १र२१रर२र १ २रर
मन्युनावृत्रहासूर्येणस्वराडयज्ञेनमघवादक्षिणास्यप्रियातनूराज्ञाविशंदाधार|
१ र२१र २ र१ २१ र१ २ १र २ १र र २र१
वृषभस्त्वष्टावृत्रेणशचीपतिरन्नेगयःपृथिव्यासृणिकोग्निनाविश्वंभूतम|
२ र र१ र र २१र २ र र१रर २१र र र२ र १र २र र१र
भ्यभवोवायुनाविश्वाःप्रजाअभ्यपवथावषट्कारेणार्द्धभाक्सोमेनसोमपाःसमित्यापरमेष्ठी|
१रर२ररर १२ १ र र२रर रर१र२र१२ १रर२रर र १२
येदेवादेवाः| दिविषदः| स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| अन्तरिक्षसदः|
१ र र२रर रर१र२र१२ १रर२रर र र १२ १ र र२रर रर१र२र१२
स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| पृथिवीषदः| स्थतेभ्योवोदेवादेवेभ्योनमः|
१रर२ररर १२ १ र र२रर रर१र२र१२ १रर२रर र १२
येदेवादेवाः| अप्सुषदः| स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| दिक्षुसदः|
१ र र२रर रर१र२र१२ १रर२रर र र र १२ १ र र२रर रर१र२र१२
स्थतेभ्योवोदेवादेवेभ्योनमः| येदेवादेवाः| आशासदः| स्थतेभ्योवोदेवादेवेभ्योनमः|

१२ १र   २१   २र १ र२१   २र       १ र २ १    २ १ २   १        २ १         र

अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा|यइदंविश्वंभूतम्|

२       १                        ५

युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||६||

191

१   २   १          २   १        २   १        २   १        २              १

–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|

२     १   २र      र१र   २ १ र२र १    २र    र१    २ १ र     २

नमउत्ततिभ्यश्चोत्तन्वानेभ्यश्चनमोनीषंगिभ्यश्चोपवीतिभ्यश्चनमोस्यद्भयश्चप्र|

१ र२र      १   २१    २         र १    २१ २ १   २   र १     २१    २

तिदधानेभ्यश्चनमःप्रविध्यद्भयश्चप्रव्याधिभ्यश्चनमःत्सरद्भयत्सारिभ्यश्चनमःश्रि|

१र   २ र १    २ १ २ १   २    र   १    २     १ र२१र २ १र२१   २१र२१   २र

तेभ्यश्चश्रायिभ्यश्चनमस्तिष्ठद्भयश्चोपतिष्ठद्भयश्चनमोयतेचवियतेचनमःपथेचविपथायच|

१२ १र   २१   २र१ र२ १   २र       १ र २ १   २ १ २   १        २    १         र

अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|

२       १                        ५

युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||१०||

१ २ १ २ १ २ १ २ १ २ १

–ओम् अधिप| ताइ| मित्रप| ताइ| क्षत्रप| ताइ| स्वःप| ताइ| धनपताऽरइ| नाऽरमाः|

र र २१र २ र र१र २र र १र २ १२र१

नमोन्नायनमोन्नपतयएकाक्षायचावपन्नादायचनमोनमः|

२१र २र १२र१ २१र २१ २ र१२ १ २ र १ र२ १२ १ २ र

रुद्रायतीरसदेनमःस्थिरायस्थिरधन्वनेनमःप्रतिपदायचपटरिणेचनमस्त्रियम्बकायचक|

१ र२ १ २र र१र २ र र १र २ १ २१र २ १र २ १ २ १र२ १२र

पर्दिनेचनमआश्रायेभ्यश्चप्रत्याश्रायेभ्यश्चनमःक्रव्येभ्यश्चविरिम्फेभ्यश्चनमःसंवृतेचविवृतेच|

१२ १र २१ २र१ र२ १ २र १ र २ १ २ १ २ १ २ १ र

अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह| अस्मभ्यम्|इडाऽ२३भा| यइदंविश्वंभूतम्|

२ १ ५

युयोऽ३आउ| वाऽ२३| नाऽ२३४माः||११||

२ १ २र ३ १ २र ३ १ २र३ १ २ ३ १ २र३ १ २र

ओम् वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः| वर्षाण्यनु शरदो हेमन्तः शिशिरइन्नुरन्त्यः||



३ ४ २ ४ ५ १र २ २ २ २१र २ २ २

–ओम् वाऽ५सन्तः| ईऽ३न्नूऽ३रन्तायाः| ग्रीष्मइन्नुराऽ१न्तीऽ३याः| वर्षाण्यनुशाऽ३हुं|राऽ३दाः|

१र ३ २ २ १११

हेमन्तःशिशिरइन्नुराऽ२| न्तीयाउ| वाऽ३४५||

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२

ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||

३ र ४ २ ४र५ १ र २१र २ १ २ र २

ओम् काऽ५या| नश्चाऽ३इत्राऽ३आभुवात्| ऊ| तीसदावृधःस| खा| औऽ३होहाइ|

१ २ ३ र२ १ १ २

कयाऽ२३शचाइ| ष्ठयौहोऽ३| हुम्माऽर| वाऽ२र्तोऽ३५हाइ||

१ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २३ २३ १२

कसत्वा सत्यो मदानां मँ हिष्ठो मत्सदन्धसः| द्दढा चिदारुजे वसु||

३ र ४ २ ४र५ १ २र१ र २ १ २ र२

काऽ५स्त्वा| सत्योऽ३माऽ३दानाम्| मा| हिष्ठोमात्सादन्ध| सा| औऽ३होहाइ|

१ २ ३ र २ १ १ २

द्दढाऽ२३चिदा| रुजौहोऽ३| हुम्माऽर| वाऽ२सोऽ३५हाइ||

३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२

अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||

३ र ४ २ ४र ५ १ २र१ २र १ २ र २

आऽ५भी| षुणाऽ३ःसाऽ३खीनाम्| आ| विताजराइतृ| णाम्| औऽ२३होहाइ|

१ २ ३ र २ १ १ २

शताऽ२३म्भवा| सियौहोऽ३| हुम्माऽर| ताऽ२योऽ३५हाइ||३||

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२

ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||

१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२

कस्त्वा सत्यो मदानां मँ हिष्ठो मत्सदन्धसः| द्दढा चिदारुजे वसु||



३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२

अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||

३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२

ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|

३ २ ३ २ ३ १ २ ३ २ ३ २३ १२ ३ २ ३२३ १ २
स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|ओम् स्वस्तिनोबृहस्पतिर्दधातु||

( अथ तं वृषं प्रेरयेत्; प्रेरणं दक्षिणस्कंधेनेति वृद्धाः )

–यथेष्टं यूथं पर्यट| ( ततः प्रदक्षिणगमनं; पात्रनिनयनं; पुनःपूरणं )

( सुसंप्रोक्षितमित्यादि )( शिवा आपः सन्तु० सौमनस्यमस्तु० अक्षतं चारिष्टं चास्तु० समाचाराद् दीर्घमायुः शान्तिःपुष्टिस्तुष्टिस्चास्तु )

–अस्य वृषोत्सर्गकर्मणः सांगतासिध्यर्थं कर्मांगभूतां गां आचार्यायाहं संप्रददे न मम|

–अस्य वृषोत्सर्गकर्मणः सांगतासिध्यर्थं ब्रह्मणे पूर्णपात्रं संप्रददे न मम|

–अस्य वृषोत्सर्गकर्मणः सांगतासिध्यर्थं ब्राह्मणान् भोजनेनाहं तर्पयिष्ये|

–अस्य वृषोत्सर्गकर्मणः सांगतासिध्यर्थं तिलान् उदकुंभान् वासो हिरण्यं च यथोत्साहं द्रव्यं वा दास्ये|

वामदेव्यजपः|

विनियोगः–कयानश्चित्रेति महावामदेव ऋषिः गायत्रीच्छन्दः विश्वेदेवादेवताः शान्त्यर्थे जपे विनियोगः|

३ र ४ २ ४र५ १ र २१र २ १ २ र २
ओम् काऽ५या| नश्चाऽ३इत्राऽ३आभुवात्| ऊ| तीसदावृधःस| खा| औऽ३होहाइ|
१ २ ३ र२ १ १ २
कयाऽ२३शचाइ| ष्ठयौहोऽ३| हुम्माऽर| वाऽ२र्तोऽ३५हाइ||
३ र ४ २ ४र५ १ २र१ र २ १ २ र२
काऽ५स्त्वा| सत्योऽ३माऽ३दानाम्| मा| हिष्ठोमात्सादन्ध| सा| औऽ३होहाइ|
१ २ ३ र २ १ १ २
दृढाऽ२३चिदा| रुजौहोऽ३| हुम्माऽर| वाऽ२सोऽ३५हाइ||



३ र ४ २ ४र ५ १ २र१ २र १ २ र २

आऽ५भी| षुणाऽ३ःसाऽ३खीनाम्| आ| विताजराइतॄ| णाम्| औऽ२३होहाइ|
१ २ ३ र २ १ १ २
शताऽ२३म्भवा| सियौहोऽ३| हुम्माऽर| ताऽ२योऽ३५हाइ||३||

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२
ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||
१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२
कस्त्वा सत्यो मदानां मँ हिष्ठो मत्सदन्धसः| दृढा चिदारुजे वसु||
३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२
अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||
३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२
ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|
३ २ ३ २ ३ १ २ ३ २ ३ २३ १२ ३ २ ३२३ १ २
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|ओम् स्वस्तिनोबृहस्पतिर्दधातु||
—अद्यपूर्वोच्चरित———तिथौ० वृषोत्सर्गकर्मणः कृतस्यविधेर्यन्न्यूनमतिरिक्तं तत्सर्वं श्री विष्णोः प्रसादात् परिपूर्णं|
—अनेन वृषोत्सर्गकर्मणा कृतेन ( अपसव्यं ) अमुकगोत्रस्य अमुकप्रेतस्य प्रेतत्व विमुक्तिपूर्वक पुण्यलोकप्राप्तिः|

|| इति वृषोत्सर्गः ||

## || महैकोद्दिष्टं तथा च षोडश श्राद्धानि ||

ंक्षणदानम्|

( अपसव्यं ) ( तिलानादाय )
गतोऽसि दिव्यलोकं त्वं कृतान्त विहितात्यात्;

मनसा वायुभूतेन चटे( विप्रे )त्वाहं निमंत्रये|

ंपूजयिष्यामिभोगेनब्राह्मणेवेदपारगे| सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः|

भवद्भिः प्रेत्कार्यं नः संपाद्यं च प्रसीदत|

स्वागतं; सुस्वागतं|

प्रेते क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|

प्रेतकर्मणि एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|

( सव्यं ) आचमनं|

( अपसव्यं )

समाध्वं; समास्म्हे|

( सव्यं ) आचमनं| प्रणवं विना भूरादिभिर्मानसैःप्राणायामः|

( अपसव्यं )
( तस्मान्नाग्निष्वात्तादि तूष्णीं कुशतिलप्रक्षेपेणदिग्बंधः )

( सव्यं )

`श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरं| एतावदेवनतयोर्नमस्कारः|

सप्तव्याधादशार्णेषु मृगाः कालन्जरे गिरौ| चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे|

तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणावेदपारगाः| प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ|

( ततस्ताम्रपात्रे प्रणीतासंज्ञके शुद्धोदकमापूर्य यवतिलगंधादीन्निक्षिप्य कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं संजप्य प्रदक्षिणमालोडयन् )



<u>विनियोग</u>ः—एतोन्विन्द्रेति तिसृणां तिरश्च्यनुष्टुबिन्द्रः; तद्विष्णोः परमं पदमिति मेधातिथिः नृचद्गायत्री श्राद्धपाकप्रोक्षणाय जलाभिमंत्रणे विनियोगः|

२३ २ ३ १ २ ३२ ३२३ १ २ ३२ ३ १ २३ १ २ ३२ ३१ २

ओम् एतोन्विन्द्र ँस्तवाम शुद्ध ॅशुद्धेन साम्ना| शुद्धैरुक्थैर्वावृध्वास ँ्शुद्धैराशीर्वान्ममत्तु||

१ २ ३२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २ ३१ २र ३ १ २

इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरुतिभिः| शुद्धोरयिनिं धारय शुद्धो ममद्धि सोम्य||

१ २ ३ १ २र ३२ ३ १ २र ३ १ २३ २ ३१ २ ३ १ २र

इन्द्र शुद्धो हि नो रयि ँ शुद्धो रत्नानि दाशुषे|शुद्धोवृत्राणिजिघ्नसेशुद्धोवाज ँसिषासिस||

१ २र ३ २ ३१ २र ३ १२ ३ २ ३२३१ २

तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्||

१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२ ३२

तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते| विष्णोर्यत्परमं पदम्||

१२ ३१ २ ३ २३ १ २ ३२ ३ २उ ३ १

अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे| पृथिव्या अधिसानवि||

(एभिर्मंत्रैर्जलमभिमंत्र्य कुशाग्रगृहितजलेन अपसव्येन श्राद्धोपहारान्पाकांश्चप्रोक्षेत् )

( अपसव्यं )

क्षुद्रदृष्टिनिपतिताः पाकादिदोषाः पाकादिनां पवित्रतास्तु; अस्तु|

( सव्यं )

भवतांप्रसादात्श्राद्धोपहाराणां पाकादीनां पवित्रतास्तु; अस्तु|

देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु; अस्तु|

याचितारश्चनः सन्तु—सन्तु वो याचितारः० मा च याचिष्म कंचन—मा याचध्वं कंचन०

एता एवाशिषः सन्तु—एताः सत्याशिषः सन्तु|

231

संकल्पः— अद्येत्यादि———तिथौ ( अपसव्यं ) अमुकगोत्रस्य अमुकशर्मणः अमुकगोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां सपिंडीकरण निमित्तस्य पार्वणैकोद्दिष्टरूप पूर्वकस्य विधेर्यन्यूनमतिरिक्तं तत्सर्वं श्री विष्णोः प्रसादात् परिपूर्णम् अस्तु|

वेदशास्त्रोक्त पुण्यफलावाप्तिरस्तु|

यत्कृतंतत्सुकृतमस्तु|

( सव्यं )

स्वस्ति भवन्तो ब्रुवन्तु| ( इति वैश्वदेविकानां जलदानं )

( अपसव्यं )

ततः सर्वे स्वस्तितेस्तु इति ब्रुयुः| ( इति पैतृकानां जलदानं )

( सव्यं )

( पितादेवः पिताचार्यः पिताधर्मः पितागुरुः; तुष्टे पितरि सन्तुष्टा देवानामपि देवताः )

( अपसव्यं )

ओम् वाजे वाजे वत वाजिनोनो धनेषु विप्राऽअमृताऽरुतज्ञा;

अस्य मध्वः पिबत मादयध्वन्तृप्तायात पथिभिर्देवयानैः|

उत्तिष्ठन्तु पितरः|

( सव्यं )

विश्वेदेवैः सह|

( अपसव्यं )

ओम् आमावाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे;

आमागन्ताम्पितरा मातरा चामासोमोऽअमृतत्वेन गम्यात्| ( अनेन प्रदक्षिणां जलधारां दद्यात् ) ( पिंडस्वस्थाने वासः; पिंडस्थाने इदमत्र चंदनंपुष्पं; कुलेकुलदीपकवृद्धिरस्तु ) ( सव्यं ) ( आचमनं; स्वयमेव तिलकं कुर्यात् )

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च; प्रयच्छन्ति तथाराज्यं प्रीतानृणांपितामहाः|

स्वस्तितेऽस्तु|

232

वामदेव्य जपः|

विनियोगः– कयानश्चित्रेति महावामदेव ऋषिः गायत्रीच्छन्दः विश्वेदेवादेवताः न्यूनातिरिक्तदोषपरिहारार्थे शान्त्यर्थे च् जपे विनियोगः|

३ र ४ २ ४र५ १ र २१र २ १ २ र २

ओम् काऽ५या| नश्चाऽ३इत्राऽ३आभुवात्| ऊ| तीसदावृधःस| खा| औऽ३होहाइ|

१ २ ३ र२ १ १ २

कयाऽ२३शचाइ| ष्ठयौहोऽ३| हुम्माऽर| वाऽ२र्तोऽ३५हाइ||

३ र ४ २ ४र५ १ २र१ र २ १ २ र२

काऽ५स्त्वा| सत्योऽ३माऽ३दानाम्| मा| हिष्ठोमात्सादन्ध| सा| औऽ३होहाइ|

१ २ ३ र २ १ १ २

द्दढाऽ२३चिदा| रुजौहोऽ३| हुम्माऽर| वाऽ२सोऽ३५हाइ||

३ र ४ २ ४र ५ १ २र१ २र १ २ र २

आऽ५भी| षुणाऽ३ःसाऽ३खीनाम्| आ| विताजराइतॄ| णाम्| औऽ२३होहाइ|

१ २ ३ र २ १ १ २

शताऽ२३म्भवा| सियौहोऽ३| हुम्माऽर| ताऽ२योऽ३५हाइ||३||

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२

ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||

१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२

कस्त्वा सत्यो मदानां म ँ हिष्ठो मत्सदन्धसः| द्दढा चिदारुजे वसु||
३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२
अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||
३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२
ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|
३ २ ३ २ ३ १ २ ३ २ ३ २३ १२ ३ २ ३२३ १ २
स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|ओम् स्वस्तिनोबृहस्पतिर्दधातु||

233

यस्य स्मृत्या च नामोक्त्या तपःश्राद्धक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
कायेन वाचा मनसेन्द्रियैर्वाबुद्धयात्मना वा प्रकृतिस्वभावात्;

करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि|

प्रमादात्कुर्वतां कर्म प्रच्यवेत्यद्धरेषुयत्; स्मरणा देवतद्विष्णोः संपूर्णस्यादितिश्रुतिः|

स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्योनजातुचित्; सर्वे विधि निषेधाः स्युरेतयोरेवकिंकराः||

–सपिंडीकरणश्राद्ध कृतस्य विधेः परिपूर्णमस्तु|

गोग्राससंक्ल्पः–सौरभेयः सर्वहिताः पवित्राः पुण्यराशयः|

प्रतिगृह्णंतु मे ग्रासं गावः त्रैलोक्य मातरः||–इदं गोभ्यो न मम||
( नीवीती )

श्वाग्राससंक्ल्पः– द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ|

ताभ्यां अन्नं प्रदास्यामि रक्षेतां पथि मां सदा||–इदं श्वभ्यां न मम||
( अपसव्यं )

वायसबलिसंक्ल्पः—यमोऽसि यमदूतोऽसि वायसोऽसि महामते|

अहोरात्रकृतं पापं बलिं भक्षतु वायसः||—इदं वायसेभ्यो न मम||

|| इति सपिंडीकरण श्राद्ध विधिः ||



## || अथ त्र्योदशाहश्राद्ध प्रयोगः ||

संकल्पः—अद्येत्यादि—तिथौ०ममश्रौतस्मार्तकर्मानुष्ठानसिद्धयर्थंयज्ञोपवीतधारणं अहंकरिष्ये|

विनियोगः—इदंविष्णुरिति मेधातिथिर्गायत्री विष्णुः सूत्रत्रिगुणीकरणे विनियोगः|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २
ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले||
विनियोगः–आपोहिष्ठेति तिसृणां सिन्धुद्विपः ऋषिः गायत्रीच्छन्दः आपो देवता यज्ञोपवीतप्रक्षालने विनियोगः|
२ ३ १ २र३२३ १ २ ३ १ २ ३१ २र३ १२
ओम् आपो हिष्ठा मयोभुवस्ता न ऊर्जेदधातन| महे रणाय चक्षसे||
१ २ ३ १२३ २ ३ १ २ ३१ २ ३ १ २ ३ १२
यो वः शिवतमो रसस्तस्य भाजयतेहनः| उशतीरिव मातरः||
२ ३ १२ ३ २ ३ १ २३ १ २ १ २ ३ १२
तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ| आपो जनयथा च नः||
( दश गायत्रीमंत्रैः अभिमंत्र्य )
विनियोगः– तत्सवितुरिति विश्वामित्रो गायत्री सविता अभिमंत्रणे विनियोगः|
२उ३क् २र १ २३१ २र ३ १२ ३१२ ३ १२ ३ १२
ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्यधीमहि|धियोयोनःप्रचोदयात्||
(देवान्आवाह्य )

१, प्रथमतन्तौ ओम् काराय नमः–ओंकारम् आवाहयामि स्थापयामि|

२, द्वितीयतन्तौ ओम् अग्नये नमः– अग्निम् आवाहयामि स्थापयामि|

३, तश्तीयतन्तौ ओम् नागेभ्यो नमः–नागान् आवाहयामि स्थापयामि|

४, चतुर्थतन्तौ ओम् सोमाय नमः–सोमम् आवाहयामि स्थापयामि|

५, पंचमतन्तौ ओम् पितृभ्यो नमः–पितृन् आवाहयामि स्थापयामि|

६, षष्ठतन्तौ ओम् प्रजापतये नमः–प्रजापतिम् आवाहयामि स्थापयामि|

७, सप्तमतन्तौ ओम् अनिलाय नमः– अनिलम् आवाहयामि स्थापयामि|

८, अष्टमतन्तौ ओम् यमाय नमः–यमम् आवाहयामि स्थापयामि|

६, नवमतन्तौ ओम्विश्वेभ्योदेवेभ्योनमः—विश्वान्देवान् आवाहयामि स्थापयामि|



<u>विनियोगः</u>— ब्रह्म यज्ञानमिति ब्रह्म त्रिष्टुप् ब्रह्मा आवाहन स्थापने विनियोगः|

१ २ ३ १ २३२ ३२ ३ १ २ ३२ ३ १२ ३१ २

ओम् ब्रह्म यज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः|

२३क२र ३ १ २ ३ २ ३ २ ३ २३ १२ ३ १ २

सबुध्न्या उपमा अस्य विष्ठाः सतश्व योनिमसतश्च विवः||

ग्रन्थि मध्ये ब्रह्मणे नमः—ब्रह्माणं आवाहयामि स्थापयामि|

<u>विनियोगः</u>—इदं विष्णुरिति मेधातिथिर्गायत्री विष्णुः आवाहन स्थापनेविनियोगः|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले||

ग्रन्थि मध्ये विष्णवे नमः—विष्णुम् आवाहयामि स्थापयामि|

<u>विनियोगः</u>— आवोराजेति वामदेवस्त्रिष्टुप् रुद्रः आवाहन स्थापने विनियोगः|

२३ १ २ ३१ २ ३ १ २र ३२३ १२

ओम् आवो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः|

३ २ ३१ २ ३ २३ २ ३ १ २ ३१२

अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम्||

ग्रन्थि मध्ये रुद्राय नमः—रुद्रम् आवाहयामि स्थापयामि|

<u>विनियोगः</u>— वाक्मनः प्राणेति ऋतवोऽनुष्टुप् सूर्यः प्रतिष्ठापने विनियोगः|

१ १ २र१ २र१र२र१र २र १ २ १र२ १ २ १ २१र २ १र

ओम् वाक्| मनः प्राणः प्राणो पानो व्यानश्चक्षुः श्रोत्रँ शर्म वर्म भूतिः प्रतिष्ठा||

ओम् एता एव समहाव्रताः सर्वावा एता विराजो दशिनी प्रथमा वि ँ शिनी द्वितिया त्रि ँ शिनी तृतीयैषा वै परमाविराड् यच्चत्वारि ँ शद्रात्रयः पंक्तिर्वै परमा विराट् परमायेव विराजि प्रतितिष्ठन्ति|

ओम् प्रणवाद्यावाहितदेवताभ्यो नमः सुप्रतिष्ठिता वरदा भवत|

ध्यायेत्|

ओम् प्रजापतेर्यत्सहजं पवित्रं कार्पाससूत्रोद्भवब्रह्मसूत्रम्|

ब्रहमत्व सिद्धयै च यशःप्रकाशं जपस्य सिद्धिं कुरु ब्रहमसूत्रम्||

236

यज्ञोपवीतधारणम्|

विनियोगः– यज्ञोपवीतमित्यस्य प्रजापतिस्त्रिष्टुप् यज्ञोपवीतम्; यज्ञोपवीतमसीति प्रजापतिर्यजुः यज्ञोपवीतम् श्रौतस्मार्तकर्मानुष्ठान सिद्धयर्थं यज्ञोपवीतधारणे विनियोगः|

ओम् यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात्|

आयुष्यमग्रयं प्रतिमुन्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः||

ओम् यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि|| ( इति मन्त्रद्वयं वाचयित्वा दक्षिणबाहुमुद्धार्य शिरोपरि नीत्वा वामस्कन्धोपरि संस्थापितं दक्षिणबाहुमूलात् अधोलम्बमेवं धारयेत्; आचम्य )

जीर्णसूत्रत्यागः|

–एतावत् दिनपर्यन्तं ब्रह्मत्वं धरितं मया;जीर्णत्वात् त्वत्परित्यागः गच्छ सूत्र यथासुखम्|
( शिरोमार्गेण निःसार्य शुद्धभूमौ त्यक्त्वा; यथाशक्ति गायत्रीमंत्रं जपेत् )
संकल्पः– अनेन नूतनयज्ञोपवीत धारणांगीभूत गायत्रीजपकर्मणा भगवान् सविता प्रीयताम् न मम|

## || अथ ब्रह्मयज्ञ प्रयोगः ||

–भस्मधारणम्|

विनियोगः–तत्पुरुषायेति तत्पुरुषो गायत्री रुद्रः भस्मधारणे विनियोगः|

ओम् तत्पुरुषाय विद्महे महदेवाय धीमहि| तन्नो रुद्रः प्रचोदयात्||

*विनियोगः–त्र्यम्बकमिति वशिष्ठोऽनुष्टुप् रुद्रः भस्मधारणे विनियोगः|

ओम् त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्; ऊर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात्|

–शिखाबन्धनम्|

विनियोगः–गायत्र्या विश्वामित्रो गायत्री सविता शिखाबन्धने विनियोगः|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

–ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

विनियोगः–गायत्र्या परमेष्ठि प्रजापतिः गायत्री सविता शिखाबन्धने विनियोगः|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२
–ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||
१ र १ र र र २१र र २ १ १
–ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियोयोनःप्रचोऽ१२१२| हुम्| आऽर|
१ ११११
दायो| आऽ२३४५||

–द्विराचमनम्|

१, ओम् भूः स्वाहा–ऋग्वेदं प्रीणामि|० २, ओम् भुवः स्वाहा–यजुर्वेदं प्रीणामि|०
३, ओम् स्वः स्वाहा–सामवेदं प्रीणामि|० ओम् भूर्भुवःस्वर्नमः– अथर्ववेदेतिहासपुराणादीनि प्रीणामि इति हस्तप्रक्षालनम्| ( पुनराचमनम् )

१, ओम् केशवाय नमः स्वाहा|० २, ओम् नारायणाय नमः स्वाहा|०
३, ओम् माधवाय नमः स्वाहा|० ४, ओम् गोविन्दाय नमः इति हस्तप्रक्षालनम्|



–प्राणायामः|

विनियोगः–भूरादिनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा; गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगती; अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा; गायत्र्याविश्वामित्रोगायत्रीसविता; आपोज्योतिरितिप्रजापतिर्यजुर्ब्रह्माग्निवायुसूर्याः प्राणायामे विनियोगः|

–ओम् भूः ओम् भुवः ओम् स्वः ओम् महः ओम् जनः ओम् तपः ओम् सत्यम्| ओम् भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही धियो योनः प्रचोदयात्| ओम आपोज्योति रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्|

–पवित्रधारणम्|

विनियोगः–पवित्रन्ते इति तिसृणां पवित्रो जगती सोमः पवित्रधारणे विनियोगः|

३१ २ ३ १२ ३१ २र ३ १२ ३ १ २

–ओम् पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः|

१२ ३२उ ३ १ २ ३ २३ १ २र३ १ २र

अतप्ततनूर्न तदामो अश्नुते श्रृतास इद्वहन्तः सं तदाशत||

विनियोगः–पवित्रन्ते इति द्वयोरादित्यो जगती ब्रह्मणस्पतिः पवित्रधारणे विनियोगः|

२ १ २र१ २१ २ १ १ २ २ २

–ओम् पवित्रन्तेविततंब्रह्मणस्पतेऽ३| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाइ|

१ र२र १ २र १ १ १ २ २ २

प्रभुर्गात्राणिपरियेषिविश्वताऽ२३ः| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाइ|

१ २ र १ विर र २ १ १ २ २ २

अतप्ततनूर्न्नतदाऽ२मोअश्नुतेऽ३| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाइ|

१र२ १ २ १ विर १ १ २ २ २ ५रर

श्रृतासइद्वहन्तःसन्तदाऽरशत| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाऽ३४| औहोवा|

२१र ररविर १र विर ३ १११

अर्कोदेवानाऽ२म्परमेवियोऽ२माऽ२३४५न्||



२ १ २र१ २१ २ १ २र१

–ओम् पवित्रन्तेविततंब्रह्मणस्पतेऽ३| हुवाइ| औहोवाऽर|

१ र२र १ २र १ १ २र१

प्रभुर्गात्राणिपरियेषिविश्वताऽ२३ः| हुवाइ| औहोवाऽर|

१ २ र १ विर र २ १ २र१

अतप्ततनूर्न्नतदाऽ२मोअश्नुतेऽ३| हुवाइ| औहोवाऽर|
१र२ १ २ १ विर १ २र १ ५रर
श्रृतासइद्वहन्तःसन्तदाऽ२शत| हुवाइ| औ| होऽ२| वाऽ२३४| औहोवा|
२१ २ र१र२ १र विर ३ १११
अर्कस्यदेवाःपरमेवियोऽ२माऽ२३४५न्||

संकल्पः–अद्यपूर्वोच्चरित–––शुभपुण्यतिथौ० श्रीपरमेश्वर प्रीतये ब्रह्मयज्ञं अहं करिष्ये| ( हस्तौ गोकर्णाकृतिवज्जान्वोरुपरिविन्यस्य मस्तकादिन्यंगान्यकंपयंस्तन्मनस्कऋषिछंदो देवता ब्राह्मणान्संस्मृत्यदज्ञाने )

विनियोगः–ओम्कारस्य ब्रह्माऋषिः दैवीगायत्रीछंदः परमात्मादेवता; व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजाऋषयः गायत्र्युष्णिगनुष्टुप्छंदासि अग्निवायुसूर्योदेवताः; तत्सवितुर्विविश्वामित्रोगायत्रीसविता सामवेदस्यादित्यो जगत्यादित्यः; स्वाध्याये विनियोगः|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२
–ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||
१ र १ र र र २१र र २ १ १
–ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियोयोनःप्रचोऽ१२१२| हुम्| आऽर|
१ ११११
दायो| आऽ२३४५||
१ ४ २रर १ १ १ र २र १
–ओऽ३म्| ओग्नाइ| आयाहिऽ३वोइतोयाऽरइ| तोयाऽरइ| गृणानोह| व्यदातोयाऽरइ|
१ १ २र१ १ ३ ५रर१ ३ ५
तोयाऽरइ| नाइहोतासाऽ२३| त्साऽ२इबाऽ२३४औहोवा| हीऽ२३४षी||



४ ५ ४र५र ४ १ र र र २
–अग्नआयाहिवी| तयाइ| गृणानोहव्यदाताऽ२३याइ|

१ र र   २ १     २  १    ३    ५रर     २  १   १११

निहोतासत्सिबर्हाऽ२३इषी| बर्हाऽ२इषाऽ२३४औहोवा| बर्हीऽ३षीऽ२३४५||

४ ५ ४र५र   ४     ४  १ र र   २   २  २  २   ३    ५   १    २

—अग्नआयाहि| वाऽ५इतयाइ| गृणानोहव्यदाऽ१ताऽ३ये| निहोताऽ२३४सा| त्साऽ२३इबाऽ३|

१    ५   ५

हाऽ२३४षोऽ६हाइ||

( इत्यारभ्य यथाशक्ति एकंसाम अर्धाध्यायमध्यायंवाप्रत्यहमधीयानो मंत्र ब्राह्मणंचसमाप्य पुनरेवमेवारभ्य समाप्येत्; यत्किंचिदध्ययनाभावे वामदेव्यं पठेत् )

३   र   ४    २  ४र  ५    १  र २१र  २ १     २   र २

—ओम् काऽ५या| नश्चाऽ३इत्राऽ३आभुवात्| ऊ| तीसदावृधःस| खा| औऽ३होहाइ|

१       २   ३  र२     १      १      २

कयाऽ२३शचाइ| ष्ठयौहोऽ३| हुम्माऽर| वाऽ२र्तोऽ३५हाइ||

३      र   ४   २   ४र५  १   २र१  र २१   २   र २  १       २

—ओम् काऽ५स्त्वा|सत्योऽ३माऽ३दानाम्|मा|हिष्ठोमात्सादन्ध|सा|औऽ३होहाइ|द्दढाऽ२३चिदा|

३ र २    १      १       २

रुजौहोऽ३| हुम्माऽर| वाऽ२सोऽ३५हाइ||

३   र   ४    २  ४र ५   १   २र१   २र१   २    र २  १       २

—आऽ५भी|षुणाऽ३ःसाऽ३खीनाम्|आ|विताजराइतॄ|णाम्|औऽ२३होहाइ|शताऽ२३म्भवा|

३ र २    १      १       २

सियौहोऽ३| हुम्माऽर| ताऽ२योऽ३५हाइ||



१ २   ३१   २र ३ २  ३१ ३२  १ २  २ ३ १ २     ३२

–ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||
१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२
कस्त्वा सत्यो मदानां मँ हिष्ठो मत्सदन्धसः| द्दढा चिदारुजे वसु||
३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२
अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||

३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२
–ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|
३ २ ३ २ ३ १ २ ३ २ ३ २३ १२
स्वस्ति नस्ताक्ष्यी अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|
३ २ ३ २३ १ २
ओम् स्वस्ति नो बृहस्पतिर्दधातु||

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २॒ ३ १२
–ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

–ओम् नमोब्रह्मणे नमोब्राह्मणेभ्यो नमआचार्येभ्यो नमऋषिभ्यो नमोदेवेभ्यो नमोवेदेभ्यो नमोवायवेचमृत्यवेचविष्णवेच नमोवैश्रवणायचोपजायच|| ( इति त्रिः पठेत् )

– अनेन ब्रह्मयज्ञाख्येन कर्मणा श्रीभगवान् परमेश्वरः प्रीयताम् नमम|

–ओम् तत्सद् ब्रह्मार्पणमस्तु|
–यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु;न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|

## || इति ब्रह्मयज्ञ प्रयोगः ||

242

## || अथ तर्पण प्रयोगः ||

– आचम्य प्राणानायम्य|

संकल्पः–अद्यपूर्वोच्चरित–––शुभपुण्यतिथौ० श्रीपरमेश्वर प्रीतयर्थं देवपितृमनुष्याणां तर्पणमहं करिष्ये|

विनियोगः–बृहत्सामनो भारद्वाजो बृहतीन्द्रः; रथंतरस्य वसिष्ठो बृहतीन्द्रेशानौ; उन्नयेत्यस्य आदित्योनुष्टुबात्मा जपे विनियोगः|

२रर र र २ र १र र २ ३ ५ १ २ ३र४र५
–ओम् औहोइत्वामिद्धिहवामहाऽ३ए| सातौवाजा| स्याकाराऽ२३४वाः| तुवाऽ३४| औहोवा|
२१ २ २ ३ ५ १र र २ ३र४र५ १ १
वृत्राइषुवाइ| द्रासाऽ३१त्| पतिन्नाऽ२३४राः| त्वांकाष्ठाऽ३४| औहोवा| सूऽरआर्वाऽ२३४|
५ ५ १
ताः| उहुवाऽ६हाउ| वा| हस्||

२ र र र १ २र र रर १ २
–ओम् आभित्वाशूरनोनुमोवा| आदुग्धाइवधेनवईशानमस्यजगतः| सुवाऽ२३र्द्दशाम्|
१ र२ १ ४ १ र र ५ ५ १
आइशानमाऽ२३इन्द्राऽ३| तास्थूऽ२३४षा| ओवाऽ६| हाउवा| अस्||

१ २र १ २र १ र २१२ १२र १ २ र र१र २र १
–ओम् उन्नयामि|होइ|(३)आदित्यंप्रांचंयन्तमुन्नयामि|होइ|(३) अहोरात्राण्यरित्राणि|होइ|(३)
र २ १ र र र र २ १ र र रर २
द्यौर्नौर्हाउ|(३) तस्यामसावादित्यईयतेहाउ|(३) तस्मिन्वयमीयमानईयामहेहाउ|(३)
१रर २ १रर २ २ १रर२ १ २ र १रर२ १ २३ १११
ईयामहेहाउ|(२) ईयामहेऽ३| हाउवा| प्रियेधामँस्त्रियक्षरे|(२) प्रियेधामँ स्त्रियक्षरेऽ२३४५||

( ततः प्राड्मुखः पातितदक्षिणजानुर्दक्षिणहस्ते कुशत्रयः शुक्लैस्तिलैः कुशाग्रैर्देवतीर्थेन देवान्जलाशयात्प्रादेशमात्र हस्तांजलिमुद्धृत्यतर्पयेत् )

–ओम् नमोब्रह्मणे नमोब्राह्मणेभ्यो नमआचार्येभ्यो नमऋषिभ्यो नमोदेवेभ्यो नमोवेदेभ्यो नमोवायवेचमृत्यवेचविष्णवेच नमोवैश्रवणायचोपजायच|| ( इति कृतांजलिः पठित्वा ब्रह्मादींस्तर्पयेत् )



–ओम् ब्रह्माणं तर्पयामि० ओम् रुद्रं तर्पयामि० ओम् विष्णुं तर्पयामि०
ओम् प्रजापतिं तर्पयामि० ओम् वेदांस्तर्पयामि० ओम् देवांस्तर्पयामि०
ओम् छंदा ँ सि तर्पयामि० ओम् ऋषीं तर्पयामि० ओम् पुराणाचार्यांस्तर्पयामि०
ओम् गंधर्वास्तर्पयामि० ओम् इतरांस्तर्पयामि० ओम् मासं तर्पयामि०
ओम् संवत्सरंसावय तर्पयामि० ओम् देवीस्तर्पयामि० ओम् अप्सरस तर्पयामि०
ओम् देवानुगांस्तर्पयामि० ओम् नागांस्तर्पयामि० ओम् सागरांस्तर्पयामि०
ओम् पर्वतांस्तर्पयामि० ओम् सरितस्तर्पयामि० ओम् दिव्यान्मनुष्यांस्तर्पयामि०
ओम् इतरान्मनुष्याणांस्तर्पयामि० ओम् यक्षांस्तर्पयामि० ओम् रक्षांसि तर्पयामि०
ओम् सुपर्णांस्तर्पयामि० ओम् पिशाचांस्तर्पयामि० ओम् पृथिवीं तर्पयामि०
ओम् ओषधीस्तर्पयामि० ओम् पशूंस्तर्पयामि० ओम् वनस्पतिंस्तर्पयामि०

ओम् भूतग्रामंचतुर्विधं तर्पयामि|

( अपसव्यं )
(दक्षिणाभिमुखः पातितवामजानुः कृष्णैस्तिलैर्द्विगुणदर्भैः पितृतिर्थगतैः पितृतीर्थेन तर्पयेत्)
( तिल लेवानो विधि–मातापिताना सांवत्सरिकना अने महालयश्राद्धना दिवसे पर्वणिना दिवसे अने तीर्थादिकमां तिल लेवा निषेध नथी; पण ते सिवाय रवी मंगळ अने शुक्रवारे तथा मघानक्षत्रे रात्रि पडवो, छठ, सातम, अगियारस अने तेरश ए तिथियोए पोताना जन्मदिवसे अने उदय तथा अस्त वखत, विवाह, जनोइ, चौल अने नांदीश्राद्धनी पछी अनुक्रमे एकवर्ष, छमास, त्रणमास अने एकमास एटला दिवस वर्जिने तीर्थे जमणा पोचा उपर तिल राखी डाबा हाथ वडे प्रति नामो लेता जइ अने घेर तर्पणना पात्रमां तिल नाखी तर्पण करवुं )
–ओम् यमं तर्पयामि० ओम् यमपुरुषां तर्पयामि० ओम् कव्यवाडनलं तर्पयामि०
ओम् सोमं तर्पयामि० ओम् अर्यम्णं तर्पयामि० ओम् अग्निष्वात्तांस्तर्पयामि०

ओम् सोमपितांस्तर्पयामि० ओम् बर्हिषदस्तर्पयामि|

( अथ स्वान्पितृन्प्रत्येकं त्रिभिस्त्रिभिरंजलिभिस्तर्पयेत् )
–अमुकगोत्रं पितरं अमुकशर्माणं तर्पयामि० अमुकगोत्रं पितामहं अमुकशर्माणं तर्पयामि०
अमुकगोत्रं प्रपितामहं अमुकशर्माणं तर्पयामि०अमुकगोत्रां मातरं अमुकीदेवीदां तर्पयामि०

अमुकगोत्रांपितामहीं अमुकीदेवीदांतर्पयामि०अमुकगोत्रां प्रपितामहींअमुकीदेवीदांतर्पयामि०
अमुकगोत्रांसापत्नमातरं अमुकीदेवीदांतर्पयामि०अमुकगोत्रं मातामहंअमुकशर्माणंतर्पयामि०
अमुकगोत्रंप्रमातामहंअमुकशर्माणं तर्पयामि०अमुकगोत्रंवृद्धप्रमातामहंअमुकशर्माणंतर्पयामि०
( एताः प्रत्येकं त्रिभिस्त्रिभिरंजलिभिः; मातामह्यादिकां स्तवेकैकांजलिना तर्पयेत् )



अमुकगोत्रांमातामहींअमुकीदेवीदां तर्पयामि० अमुकगोत्रांप्रमातामहींअमुकीदेवीदांतर्पयामि०
अमुकगोत्रांवृद्धप्रमातामहींअमुकीदेवीदां तर्पयामि० अमुकगोत्रांपत्नींअमुकीदेवीदांतर्पयामि०
अमुकगोत्रं तनयं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रां तनयां अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रं पितृव्यकं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं मातुलं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं भ्रातरं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रां पितृभगिनीं अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रां मातृभगिनीं अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रां भगिनीं अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रं श्वसुरं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं सद्गुरुं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं शिष्यं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं आपतं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
( स्मृत्युक्त तर्पणीयानांतु पुण्याति शयत्वाद्यथा संभवं तर्पणं कर्तव्यं )

–पितृव ॅ शामातृव ॅ शौयेचान्ये मत्त उदकमर्हंतितांस्तर्पयामि|

( कण्ठावलंबित )
( कुशमध्यैर्मनुष्यतीर्थेनोर् ऊद्धवजानुः प्रत्यङ्मुखः प्रत्येकं द्विस्तर्पयेत् )
–ओम् सनकं तर्पयामि० ओम् सनंदनं तर्पयामि० ओम् सनातनं तर्पयामि०
ओम् कपिलं तर्पयामि० ओम् आसुरिं तर्पयामि० ओम् वोढुं तर्पयामि०

ओम् पंचशिखं तर्पयामि|

–येषां नपिता नभ्राता नपुत्रो नान्यगोत्रिणः; ते सर्वे तृप्तिमायांतु मयोत्सृष्टैः कुशैः सदा|

( इति मंत्रेण कुशांस्त्यक्त्वा सव्येनाचम्य; ततोपसव्येनैव दक्षिणाभिमुखस्तिष्ठन्नपसव्येन् स्थले स्नानवस्त्रैक देशं निष्पीडयेत्; इति गृहे निषिद्धं )

–ये चास्माकंकुले जाता अपुत्रा गोत्रिणो मृताः;ते गृह्णंतु मयादत्तं वस्त्र निष्पीडनोदकं|



( सव्यं ) ( आचमनं ) (सूर्यादिभ्यस्तत्तन्मंत्रेणार्ध्यं दद्यात् )

विनियोगः–बण्महानिति जमदग्निर्बृहस्पतिः सूर्यः अर्घप्रदाने विनियोगः|

२ ३ १ २ ३ १२ ३१ २

ओम् बण्महा ँ असि सूर्य बडादित्य महा ँअसि|

३१ २ ३ १ २३ १ २ ३ १ २ ३ १ २

महस्ते सतो महिमा पनिष्टम मह्ना देव महा ँ असि्||–ओम् भूर्भुवः स्वः सूर्य एषतेर्घः|

विनियोगः– आप्यायस्वेति गौतमो गायत्री सोमः अर्घप्रदाने विनियोगः|

ओम् आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्| भवा वाजस्य संगथे||

–ओम् भूर्भुवः स्वः सोम एषतेर्घः|

विनियोगः– अग्निमूर्द्धेति विरुपो गायत्री भौमः अर्घप्रदाने विनियोगः|

३ २ ३ २ ३२ ३ १ २र ३ २ ३२ ३ १ २र

–ओम् अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्| अपा ँ रेता ँ सि जिन्वति||

–ओम् भूर्भुवः स्वः भौम एषतेर्घः|

विनियोगः– अग्नेविवस्वतेति प्रस्कण्वो बृहती बुधः अर्घप्रदाने विनियोगः|

२ ३ १ २ ३१२ ३ १ २र २ ३ १२ ३ २३ २ ३ १ २३१२

ओम् अग्नेविवस्वदुषसश्चित्र ँराधो अमर्त्य|आ दाशुषे जातवेदो वहात्वमद्यादेवा ँउषर्बुधः||

–ओम् भूर्भुवः स्वः बुध एषतेर्घः|

विनियोगः—बृहस्पतेइति अप्रतिरथः त्रिष्टुप्बृहस्पतिः बृहस्पतिः अर्घप्रदाने विनियोगः|

१२ ३ १२ ३ १२ ३ १ २र ३ १२

—ओम् बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः|

३ १ २र ३ २ ३ १ २र १ २ ३ १ २र

प्रभन्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्||

—ओम्भूर्भुवःस्वःबृहस्पतेएषतेर्घः|

246

विनियोगः—शुक्रंतेइति भरद्वाजः त्रिष्टुप् शुक्रः अर्घप्रदाने विनियोगः|

३ २ ३ १ २३ १ २ ३ १ २र ३ १२३ १ २

—ओम् शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि|

२ ३ २ ३ १ २र ३१ २ ३२ ३ १ २

विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु||

—ओम् भूर्भुवः स्वः शुक्र एषतेर्घः|

विनियोगः—शन्नःसिन्धुद्विपो गायत्री शनिः अर्घप्रदाने विनियोगः|

१ २ ३ २३१ २ ३ १ २ ३१२ २उ ३१ २

ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||

—ओम्भूर्भुवःस्वःशनेएषतेर्घः|

विनियोगः—कयानश्चित्रेति वामदेवो गायत्री राहुः अर्घप्रदाने विनियोगः|

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२

ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||

–ओम् भूर्भुवः स्वः राहो एषतेर्घः|

<u>विनियोगः</u>–केतुंकृण्वन्निति मधुच्छन्दा गायत्री केतुः अर्घप्रदाने विनियोगः|

३ २ ३ १ २ ३२३ १२ ३१ २ २३१ २

ओम् केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे| समुषद्भिरजायथाः||

–ओम्भूर्भुवःस्वःकेतवएषतेर्घः|

– अनेन यथाशक्ति देवपितृमनुष्य तर्पणाख्येन कर्मणा श्रीभगवान् मम समस्त पितृ स्वरूपि जनार्दन वासुदेवः प्रीयताम् नमम|

–ओम् तत्सद् ब्रह्मार्पणमस्तु|

–ओम् श्री गयागदाधरस्तृप्यतु|

–यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु;न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|

ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|

|| <u>इति तर्पण प्रयोगः</u> ||

247

( सव्यं ) <u>संकल्पः</u>– अद्येत्यादि–––तिथौ० करिष्यमाण श्रवणादिदेवतानां पूजन प्रारंभागं श्री विष्णोः यथालाभोपचारैः पूजनं करिष्ये|

( ताम्रपात्रे शुद्धोदकमापूर्य तत्र गंधादिनिक्षिप्य गायत्र्यादिमंत्रैः स्तजलमभिमंत्र्यतेनजलेन पूजासामग्रींसंप्रोक्ष्य प्रार्थयेत्; विष्णुपूजोपहाराणां पवित्रतास्तु )

<u>संकल्पः</u>–पूजन अधिकारार्थं पुरुषसूक्तेन( नाममन्त्रेण ) देहन्यासान् करिष्ये|

( नाममंत्रेण देहन्यासान् )

ओम्– अंगुष्ठाभ्यां नमः० नमो–तर्जनीभ्यां नमः० भगवते–मध्यमाभ्यां नमः०
वासुदेवाय–अनामिकाभ्यां नमः० नमः–कनिष्ठिकाभ्यां नमः०

ओम्नमोभगवतेवासुदेवायनमः–करतलकरपृष्ठाभ्यां नमः|

ओम्–हृदयाय नमः० नमो–शिरसे स्वाहा० भगवते–शिखायै वषट्०
वासुदेवाय–कवचाय हुम्० नमः–नेत्रत्रयाय वौषट्०

ओम्नमोभगवतेवासुदेवायनमः– अस्त्राय फट्|

विनियोगः–ओम् इदं विष्णुरित्यादिनां षण्णां मेधातिथिः ऋषिः गायत्रीछन्दः विष्णुरिन्द्रश्च देवता; सहस्त्रशीर्षेति पन्चानां नारायणः ऋषिः अनुष्टुप्छन्दः पुरुषो देवता; सोमःपवतेति वशिष्ठः ऋषिः त्रिष्टुप्छन्दः विश्वेदेवा देवता; किमित्तेतित्रयाणां वशिष्ठः ऋषिः त्रिष्टुप्छन्दः विष्णुर्देवता; प्रथश्चेत्यस्यप्रथःऋषिःत्रिष्टुप्छन्दःधाता सविता विष्णुर्वादेवता

पुरुषसूक्तेन न्यासे(पूजनेच)विनियोगः|

१, आवाहनम्|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्यपाँसुले||(वामहस्ते–डाबाहाथे)

२, आसनम्|

१ २ ३१ २र ३ १ २ ३ १ २र २ ३१२ ३ १२

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः| अतोधर्माणिधारयन्||(दक्षिणहस्ते–जमणाहाथे)

३, पाद्यम्|

२ ३ १२ ३ १ २ ३ १२ ३२ १२ ३ २ ३ १ २

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे| इन्द्रस्य युज्यःसखा|| ( वामपादे–डाबापगे )



४, अर्घ्यम्|

१ २र ३२ ३१ २र ३ १२ ३ २३ २३१ २

तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्|| (दक्षिणपादे–जमणापगे)

५, आचमनीयम्|

१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२३२

तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते|विष्णोर्यत्परमंपदम्||(वामजानुनि–डाबाठींचणे)

६, स्नानम्|

१२ ३१ २ ३ २३ १ २ ३२ ३ २उ३ १ २

अतो देवा अवन्तु नोयतोविष्णुर्विचक्रमे|पृथिव्याअधिसानवि||(दक्षिणजानुनि–जमणाठींचणे)

७, वस्त्रम्|

३१ २ ३ १२ ३ २ ३१ २

सहस्त्रशीर्षाः पुरुषः सहस्त्राक्षः सहस्त्रपात्|

१र २र ३ १ २ ३ १ २ ३ २

स भूमि ँ सर्वतो वृत्वा त्यतिष्ठद्दशा ँ गुलम्|| ( वामकट्याम्–डाबीकमरे )

८, उपवीतम्|

३ २ ३२उ ३ १२३ १ २ ३ १२ ३१ २

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः|

२ ३ २३क २र ३२ ३ २

तथा विष्वडव्यक्रामदशनानशने अभि|| ( दक्षिणकट्याम्–जमणीकमरे )

६, गंधम्|

१२ ३२उ ३ २ ३२उ ३ १ २

पुरुष एवेद ँ सर्वं यद्भूतं यच्च भाव्यम्|

१ २ ३ १ २३ १२ ३ १२ ३ १ २ ३ २

पादोऽस्य सर्वाभूतानि त्रिपादस्या मृतं दिवि|| ( नाभौ–नाभिए )

१०, पुष्पम्|

१ २ ३२र ३ १ २ ३ १२ ३ १२३ १ २र३१ २र ३ १२

तावानस्य महिमा ततो ज्याया ँ श्च पूरुषः|उतामृतत्वस्येशानोयदन्ने नातिरोहति||(हृदये)



११, धूपम्|

१ २ ३ १२ ३२ ३ २ ३ १२ २३ १ २र ३२उ ३ १२ ३२

ततो विराडजायत विराजो अधि पुरुषः| सजातो अत्यरिच्यतपश्चाद्भूमिमथो पुरः||(कंठे)

१२, दीपम्|

१ २ ३ १ २३ १ २३ २ ३ १ २ ३ १ २३ २

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः|

३ १ २र३१ २र ३१ २ ३ १ २र

जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः|| ( वामबाहौ–डाबाखभे )

१३, नैवेद्यम्|

१ २र ३२ ३ २ ३ १ २र३१ २ ३ १ २

किमित्ते विष्णो परिचक्षि नाम प्रयद्ववक्षे शिपिविष्टो अस्मि|

१ २र ३ १ २र ३२र१३ १२ ३ २ ३१ २

मावर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ|| (दक्षिणबाहौ–जमणाखभे)

१४, दक्षिणा–तांबूलम्|

१ २र३ १ २ ३२ ३१ २ ३१ २ ३२

प्रतत्ते अद्य शिपिविष्ट हव्यमर्यः शँ सामि वयुनानि विद्वान्|

१ २ ३२ ३१२ ३ १ २ ३ १ २र ३ २

तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके|| ( मुखे )

१५, प्रदक्षिणाम्|

१२ ३ १ २र ३ १ २ ३ २

वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्|

१ २ ३ २३ १ २ ३ १ २ ३ २ ३ १ २

वर्धंतु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः|| ( नेत्रयोः )

१६, नमस्कारः|

१२ ३ १ २ ३ १२ ३ १ २र ३ १२ ३२

प्रथश्च यस्य सप्रथश्च नामानुष्टु भस्य हविषो हविर्यत्|

३ १ २र ३२ ३ १ २ ३१ २र ३ १२

धातुर्द्युतानात्सवितुश्च विष्णो रथंतर माजभारा वसिष्ठः|| ( मूर्ध्नि–मस्तके )

संकल्पः–श्री विष्णोः यथालाभोपचार–पूजनविधेः परिपूर्णतास्तु|

250

( पुनराचम्य प्राणानायम्य गायत्र्यादिमंत्रैर्जलमभिमंत्र्य तेनोदकेन पूजोपहारं प्रोक्ष्येत् )

–श्रवणादिदेवतानां पूजोपहारद्रव्याणां पवित्रतास्तु; अस्तु|

देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु; अस्तु|

संकल्पः– अद्येत्यादि–––तिथौ० ( अपसव्यं ) अमुकगोत्रस्य अमुकशर्मणः कृतौर्ध्वदेहिक कर्म साद्गुण्यार्थं श्रवणादिदेवता प्रीतये श्रवणादिदेवतानां यथालाभोपचारैःपूजनंकरिष्ये|

(वस्त्रोपरितंदुलैरष्टदलं कृत्वा कर्णिकायां यथाविधिना कलशंसंस्थाप्यतत्रआवाहनादिकं)

–अथ कलशस्थापनम्|

१, विनियोगः– भूमिरिति इन्द्रो यजुश्च्छन्दः भूम्यादयो देवता भूम्यभिमन्त्रणे विनियोगः|

१र २ १ २ १ २ ५रर २ २र१र ११११

ओम् भूमिः|(३) अन्तरिक्षम्|(३) द्यौः|(२) द्याऽ३४| औहोवा| एऽ३| भूताया२३४५||

२, विनियोगः– आविशन्निति जमदग्निर्भार्गवः गायत्री पवमानः सोमः कलशस्थापने विनियोगः|

३ २ ३१ २ ३२उ ३ १ २३ १ २र २ ३१ २

ओम् आविशन्कलशँ सुतो विश्वा अर्षन्नभि श्रियः| इन्दुरिन्द्राय धीयते||

विनियोगः– आविशन्निति उशना गायत्री सोमः कलशस्थापने विनियोगः|

५र र ५ १ २र १२ १ २ ३न २ १ २

ओम् आविशन्कालाऽ६शँसुताः|वाइश्वाअर्षन्|अभाइश्रायाऽ३ः|ओऽ३हाऽ३|ओवा|

३ ५ १ १ ३ ५रर २ र ३ ११११

ओऽ२३४हाइ| इन्दूऽ२३ः| आऽ२इन्द्राऽ२३४औहोवा| यधीयतेऽ२३४५||

३, विनियोगः–समन्यायन्त्युइति गृत्समदः शौनकःत्रिष्टुप् अपांगपातः

जलपूरणेविनियोगः|

२३ १ २र ३ १ २३ २३२ ३क२र

ओम् समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति|

२३ २ ३ १ २ ३ १ २३ १ २र३१२ ३ १ २

तमू शुचिँ शुचयो दीदिवाँ समपान्नपातमुप यन्त्यापः||

## 251

विनियोगः–अपांसमन्यायन्त्युइति गृत्समदः शौनकःत्रिष्टुप्अपांगपातः

जलपूरणेविनियोगः|

२र १र २ १ र २ २र १र २ र र र

ओम् हाउ|(३) ऐरयत्|(३) अपःसमैरयत्|(३) भूतमैरयत्|(३) अपांगर्भोग्निरिडा|

र र र २ र र र १ र २१ २

पांगर्भोग्निरिडा|(२) पृथिव्यागर्भोग्निरिडा|(३) समन्यायन्त्युपयन्तियाऽ२३न्याः|

र १र २ १ २ १ र र र२ १ २

समानमूर्वंनद्यस्पृणाऽ२३न्ती| तमूशुचिँ शुचयोदीदिवाऽ२३ँ साम्|

१ र र २ १ २

अपान्नपातमुपयन्तियाऽ२३पा३ः|

२र १र २ १ र २ २र १र २ र र र

हाउ|(३) ऐरयत्|(३) अपःसमैरयत्|(३) भूतमैरयत्|(३) अपांगर्भोग्निरिडा|

र र र २ र र र २ र र २

पांगर्भोग्निरिडा|(२) पृथिव्यागर्भोग्निरिडा|(२) पृथिव्यागर्भोग्निरिडाऽ३हाउवा|

२र १ २ १ २र १ २ १ २र१र २१ २ १ २र १र २१र र २र

ए|अग्निःशिशुक्वः|,|शुक्रःशिशुक्वः|,|तेजःशक्रस्यशक्वम्|,| तेजःसप्राःसमीचीः|

२र १र२१ २र१२र१ २र १ र ३ ११११

ए| तेजऊषोनजारः| ए| सुवर्ज्योतीऽ२३४५ः||

४, विनियोगः—त्वमिमा ओषधीरिति गौतमोराहूगणः त्रिष्टुप् सोमः ओषधिप्रक्षेप `विनियोगः|

२ ३ १ २र ३ २ ३ २३ १ २ ३ २

ओम् त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः|

१ २र ३ २ १ २३ १ २र ३ १ २र

त्वमातनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ|

252

विनियोगःत्वमिमाओषधीरितिगौतमोराहूगणःत्रिष्टुप्सोमःओषधिप्रक्षेपेविनियोगः|

२र ३र २ २र ४ २ १११ ४ २

ओम् हाउ|(३)हौवा|(३)हाह|हौवा|(३)होवाऽ३|(३)होऽ३वाऽ३४५|(२) होऽ३वाऽ३४|

५रर १ र २र र १ २र १ २१र २ १ र

औहोवा| त्वमिमाओषधीःसोमविश्वा| त्वमपोअजनयस्त्वङ्गाः|

र २र १ २ १ र २र१ र २

त्वमातनोरुर्वन्तरिक्षम्| त्वन्ज्योतिषावितमोववर्थ|

२र ३र २ २र ४ २ १११ ४ २

हाउ|(३) हौवा|(३) हाह|हौवा|(३) होवाऽ३|(३) होऽ३वाऽ३४५|(२) होऽ३वाऽ३४|

५रर २र १ २ १ २ १र २ १ र २ १ र२र र

औहोवा| ,| जनदिवमन्तरिक्षम्पृथिवींविश्वभोजसम्पुरूरूपाअजीजनः|

१

इट्इडाऽ२३४५||

५, विनियोगः—स्योनापृथिवीति मेधातिथिः पर उष्णिक् पृथिवी मृत्तिकाप्रक्षेपे विनियोगः|

ओम् स्योना पृथिवी नो भवानृक्षरा निवेशनी| यच्छानः शर्म सप्रथो देवान् मा भयादिति||

६,विनियोगः—चन्द्रमाअप्सवन्तरेति त्रितःआप्स्यः पंक्तिः विश्वेदेवाः हिरण्यप्रक्षेपेविनियोगः|

३ १ २ ३ २ १ २र३ १ २ ३ २

ओम् चन्द्रमा अप्स्वांऽ३न्तरा सुपर्णो धावते दिवि|

१ २ ३ १ २ ३ १ २ ३ १ २

न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी||

विनियोगः—चन्द्रमा अप्स्वन्तरेति त्रितः पंक्तिरिन्द्रः हिरण्यप्रक्षेपे विनियोगः|

२ १ र २ १ २ १र२ २१र र २

ओम् चन्द्रमाआउवा| प्सुवान्तराउवा| सुपर्णोधाउवा| वतेदिवी| नवोहिराउवा|

१ २ १ २ १ २ १र २

ण्यनाइमायाउवा|पदंविन्दाउवा|तिविद्युताः|वित्तम्माआउवा|स्यरोदाऽ२३सा३४३इ|

१

ओऽ२३४५इ| डा||



७,विनियोगः—परिवाजपतिरितिवामदेवोगौतमःगायत्र्यग्निःपन्वरत्नप्रक्षेपेविनियोगः|

२३ १ २ ३२ ३ २३ १ २ २३ १ २ ३१ २

ओम् परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्| दधद्रत्नानि दाशुषे||

विनियोगः—परिवाजपतिरिति वामदेवो गायत्र्यग्निः पन्वरत्नप्रक्षेपे विनियोगः|

४५र ४ ५ २१ २ १ २ र १ अ १

ओम् पर्यौ|होयिवाजा|पतायिःकाऽ१वीऽरः|आग्निर्हव्या|नायक्रमीऽरत्|दधाऽ२३त्|

१ ३ ५रर २ र १३ ११११

रा२त्नाऽ२३४औहोवा| निदाशुषेऽ२३४५||

८,विनियोगः—इदं वसोरिति मेधातिथिः काण्वः प्रियमेधाश्चांगिरसः गायत्री त्रिशोकः काण्वः वस्त्रवेष्टने विनियोगः|

३ १ २ ३२उ ३ २३ १२ ३१२ १ २ ३ १ २

ओम् इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्| अनाभयिन्ररिमा ते||

विनियोगः–इदं वसोरिति गरो गायत्रीन्द्रः वस्त्रवेष्टने विनियोगः|

५ २ १ २ १विर र २१ २

ओम् इदंवसाउ| सुतमाऽ२३न्धाः| पिबाऽ२सुपू| णमुदाऽ२३राऽ३४म्|

३ २ ३ २ ४ ५ ४ ५

अनाऽ३४भयाऽ३इन्| ररोवा| माऽ५तोऽ६हाइ||

६,विनियोगः–अयमूर्जेति प्रजापतिरनुष्टुप्उदुम्बरः पन्चपल्लवनिधानेविनियोगः|

ओम् अयमूर्जावतो वृक्ष ऊर्जीवफलिनीभव|पर्णवनस्पतेनुत्वानुत्वासूयता ँरयिः||

१०,विनियोगः–सघातमितिगोतमोराहूगणःपंक्तिःअग्निःपूर्णपात्रनिधानेविनियोगः|

२ ३ १ २र३ २३१ २ ३ १ २

ओम् स घा तं वृषण ँ रथमधि तिष्ठाति गोविदम्|

१ २र ३२ ३ १२ ३ १ २ ३ २३क २र ३ १ २

यः पात्र ँ हारियोजनं पूर्णमिन्द्राचिकेतंति योजा न्विन्द्र ते हरि||



विनियोगः–सघातमिति लुशः पंक्तिरिन्द्रः पूर्णपात्रनिधाने विनियोगः|

३४र ३ ४५ ३ २ ३र४र५ १ २ र १ २ १र १

ओम् सघातंवृषणम्|रथाऽ३४औहोवा|आधितिष्ठा|तिगोवाऽ१इदाऽरम्|यःपात्र ॅहा|

अ ३ ५ २र१ २ ३ ५ १र २ २

रियोऽ२जाऽ२३४नाम्| पूर्णमि| द्रा| चीकेताऽ२३४ती| योजानूऽ३वाऽ३इ|

१ ३ ५रर ३ ५

द्राऽ२ताऽ२३४औहोवा| हाऽ२३४री||

विनियोगः—यदाकदेति वज्रो बृहति वरुणः वरुण आवाहने विनियोगः|

३ २ ३ १ २ ३ १२ ३ १ २ २ ३ १ २

ओम् यदा कदा च मीढुषे स्तोता जरेत मर्त्यः|

१ २र ३ १२ ३ २ ३ २ ३ २३ १ २

आदिद्वन्देत वरुणं विपा गिरा धर्त्तारं विव्रतानाम्||

विनियोगः—यदाकदेति वज्रो बृहति वरुणः वरुण आवाहने विनियोगः|

५ र १ ३ ५र र ३ ५ २र१र २र १२ १ २

ओम्यदाकदा|चाऽ२माऽ२३४औहोवा|ढूऽ२३४षे|स्तोताजरेतमर्तियऽ३ः|आदिद्वन्दे|

१ अ ३ २ ३ २१ २र१ १ ३ ५रर

तावरुणाऽ२३४म्|विपाऽ३४गिरा|धार्त्तारांवी२३|व्राऽ२ताऽ२३४औहोवा|

३ ११११

नाऽ२३४५म्||

विनियोगः— वाक्मनः प्राणेति ऋतवोऽनुष्टुप् सूर्यः प्रतिष्ठापने विनियोगः|

१ १ २र१ २र१र २र१र २र१ २ १र२ १२ १२ १र २ १र

ओम् वाक्|मनः प्राणः प्राणो पानो व्यानश्चक्षुः श्रोत्र ँ शर्म वर्म भूतिः प्रतिष्ठा||

ओम् एता एव समहाव्रताः सर्वावा एता विराजो दशिनी प्रथमा वि ँ शिनी द्वितिया त्रि ँ शिनी तृतीयैषा वै परमाविराड् यच्चत्वारि ँ शद्रात्रयः पंक्तिर्वै परमा विराट् परमायेव विराजि प्रतितिष्ठन्ति|

ओम् वरुणः सांगः सपरिवारः सुप्रतिष्ठितो वरदो भव| (यथालाभोपचारैः वरुणं संपूज्य)

संकल्पः— अनेन मत्कृतेन पूजनेन वरुणः सांगः सपरिवारः प्रीयताम्|

( ललिता विश्वमाता च भद्रा च भुवनेश्वरी; कन्दर्पवासिनी आर्या मोक्षदा रेवती तथा; देहगा मुक्तिदा पद्मा क्षमा कीर्तिस्त्रयोदश )

१, ओम् भूर्भुवः स्वः ललितायै नमः—ललिताम् आवाहयामि स्थापयामि|

२, ओम् भूर्भुवः स्वः विश्वमात्रे नमः—विश्वमातरम् आवाहयामि स्थापयामि|

३, ओम् भूर्भुवः स्वः भद्रायै नमः—भद्राम् आवाहयामि स्थापयामि|

४, ओम् भूर्भुवः स्वः भुवनेश्वर्यै नमः—भुवनेशवरीम् आवाहयामि स्थापयामि|

५, ओम् भूर्भुवः स्वः कन्दर्पवासिन्यै नमः—कन्दर्पवासिनीम् आवाहयामि स्थापयामि|

६, ओम् भूर्भुवः स्वः आर्यायै नमः— आर्याम् आवाहयामि स्थापयामि|

७, ओम् भूर्भुवः स्वः मोक्षदायै नमः—मोक्षदाम् आवाहयामि स्थापयामि|

८, ओम् भूर्भुवः स्वः रेवत्यै नमः—रेवतीम् आवाहयामि स्थापयामि|

६, ओम् भूर्भुवः स्वः देहगायै नमः—देहगाम् आवाहयामि स्थापयामि|

१०, ओम् भूर्भुवः स्वः मुक्तिदायै नमः—मुक्तिदाम् आवाहयामि स्थापयामि|

११, ओम् भूर्भुवः स्वः पद्मायै नमः—पद्माम् आवाहयामि स्थापयामि|

१२, ओम् भूर्भुवः स्वः क्षमायै नमः—क्षमाम् आवाहयामि स्थापयामि|

१३, ओम् भूर्भुवः स्वः कीर्त्यै नमः—कीर्तिम् आवाहयामि स्थापयामि|

विनियोगः— वाक्मनः प्राणेति ऋतवोऽनुष्टुप् सूर्यः प्रतिष्ठापने विनियोगः|

१ १ २र१ २र१र२र१र २र १ २ १र२ १ २ १ २१र २ १र

—ओम् वाक्| मनः प्राणः प्राणो पानो व्यानश्चक्षुः श्रोत्र ँ शर्म वर्म भूतिः प्रतिष्ठा||

—ओम् एता एव समहाव्रताः सर्वावा एता विराजो दशिनी प्रथमा वि ँ शिनी द्वितिया त्रि ँ शिनी तृतीयैषा वै परमाविराड् यच्चत्वारि ँ शद्रात्रयः पंक्तिर्वै परमा विराट् परमायेव विराजि प्रतितिष्ठन्ति|

—ओम् भूर्भुवः स्वः ललितादित्रयोदशदेवताः सुप्रतिष्ठिता वरदा भवत|

(यथालाभोपचारैः ओम् भूर्भुवःस्वः ललितादित्रयोदशदेवताभ्यो नमः इति मन्त्रेण पूजयेत्)

*अर्घं–नमस्ते श्रवणेदेवि साक्षीभूतेसनातनि; एष ह्यर्घोस मया दत्तस्तारय त्वंभवार्णवत्|

– ओम् भूर्भुवः स्वः ललितादित्रयोदशदेवताभ्यो नमः अर्घं समर्पयामि|

संकल्पः– अनया पूजया ओम् भूर्भुवः स्वः ललितादित्रयोदशदेवताः प्रीयन्ताम् नमम|

256

( अन्यैरपि ग्रन्थे पूर्वे विष्णु तत् दक्षिणे द्वादशश्रावणान् अथवा स्त्रीविषये ललितादयः स्थापयेत् तद्वामे गोधूमाष्टदलं कृत्वा तस्योपरि मोदकसहितं मृन्मयकुम्भे अनन्तादि चतुर्दशानां स्थापनम् )

–विष्णुआदिद्वादशश्रवणदेवतानां स्थापनम्|

१, ओम् भूर्भुवः स्वः विष्णवे नमः–विष्णुम् आवाहयामि स्थापयामि| ( एवं सर्वत्र )

२,पुरुषोत्तमाय० ३,शार्ङ्गधन्विने० ४,गरुडध्वजाय० ५,अनंताय० ६,गोवर्धनाय० ७,नित्याय० ८,देवगर्भाय० ९,यज्ञपुरुषाय० १०,सुब्रह्मण्याय० ११,जयाय० १२,शौर्यै०

विनियोगः– वाक्मनः प्राणेति ऋतवोऽनुष्टुप् सूर्यः प्रतिष्ठापने विनियोगः|

१ १ २र१ २र१र२र१र २र १ २ १र२ १ २ १ २१र २ १र

–ओम् वाक्| मनः प्राणः प्राणो पानो व्यानश्चक्षुः श्रोत्रँ शर्म वर्म भूतिः प्रतिष्ठा||

–ओम् एता एव समहाव्रताः सर्वावा एता विराजो दशिनी प्रथमा विँशिनी द्वितिया त्रिँशिनी तृतीयैषावै परमाविराड् यच्चत्वारिँशद्रात्रयः पंक्तिर्वै परमा विराट् परमायेव विराजिप्रतितिष्ठन्ति|

–ओम् भूर्भुवः स्वः विष्णुआदिदशश्रवणदेवताः सुप्रतिष्ठिता वरदा भवत|

(यथालाभोपचारैः ओम् भूर्भुवःस्वः विष्णुआदिदशश्रवणदेवताभ्योनमः इति मन्त्रेणपूजयेत्)

संकल्पः– अनया पूजया ओम् भूर्भुवः स्वः विष्णुआदिदशश्रवणदेवताः प्रीयन्ताम् नमम|

– अनन्तादिचतुर्दशदेवतानां स्थापनम्|

१, ओम् भूर्भुवः स्वः अनन्ताय नमः– अनन्तम् आवाहयामि स्थापयामि| ( एवं सर्वत्र )

२,ब्रह्मणे० ३,भास्कराय० ४,ईश्वराय० ५,विशरूपाय० ६,महाकालानाय० ७,सृष्टिसंहारकाय० ८,वामनाय० ९,विष्णवे० १०,पद्मनाभाय० ११,वासुदेवाय० १२,केशवाय० १३,नारसिंहाय० १४,त्रिविक्रमाय०

विनियोगः– वाक्मनः प्राणेति ऋतवोऽनुष्टुप् सूर्यः प्रतिष्ठापने विनियोगः|

१ १ २र१ २र१र२र१र २र १ २ १र२ १ २ १ २१र २ १र

–ओम् वाक्| मनः प्राणः प्राणो पानो व्यानश्चक्षुः श्रोत्र ँ शर्म वर्म भूतिः प्रतिष्ठा||
–ओम् एता एव समहाव्रताः सर्वावा एता विराजो दशिनी प्रथमा वि ँ शिनी द्वितिया त्रि ँ शिनी तृतीयैषा वै परमाविराड् यच्चत्वारि ँ शद्रात्रयः पंक्तिर्वै परमा विराट् परमायेव विराजि प्रतितिष्ठन्ति|

–ओम् भूर्भुवः स्वः अनन्तादिचतुर्दशविष्णुआदिदेवताः सुप्रतिष्ठिता वरदा भवत|
(यथालाभोपचारैः ओम् भूर्भुवःस्वः अनन्तादिचतुर्दशदेवताभ्योनमः इति मन्त्रेणपूजयेत्)

संकल्पः– अनया पूजया ओम् भूर्भुवः स्वः अनन्तादिचतुर्दशदेवताः प्रीयन्ताम् नमम|

257

( श्राद्ध असंभवे विष्णुद्देशेन ब्राह्मणान् पूजापूर्वकं भोज्येद् आमान्नं वा दद्यात्; )
संकल्पः–दास्यमानदानांगत्वेन वैष्णव श्राद्धसिद्धये यथा सपन्नेनान्नेन त्रीन्(यथा)ब्राह्मणान् भोजनेनाहं तर्पयिष्ये; आमान्नानिवा दास्ये|

*  *  *

–वैष्णवश्राद्धप्रयोगः|

( यवानादाय )

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|

सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः देवकार्यं नः संपाद्यं च प्रसीदत|

स्वागतं; सुस्वागतं|

दैवे क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|

विष्णो एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|

ओम् भूर्भुवः स्वः समाध्वं; ओम् समास्म्हे|

आचमनं| प्राणायामः|

गायत्रींगायत्रं च पठेत्|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

ओम्  भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||
१ र १ र र र २१र र २ १ १
ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियो योनः प्रचोऽ१२१२| हुम्| आऽर|
१ ११११
दायो| आ२३४५||

प्रसादं कृत्वा| वैष्णवं श्राद्धं कारयध्वं|
( ऋजुकुशायवप्रक्षेपेण दिग्बन्धः )

अग्निष्वात्ताःपितृगणाः प्राचीं रक्षन्तु मे दिशम्|तथा बर्हिषदः पान्तु याम्यां येपितरःस्थिताः|

प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः| ऊर्ध्वतस्त्वर्यमा रक्षेत् कव्यवालनलोप्यधः|

रक्षोभूतपिशाचेभ्यः तथैवासुरदोषतः| सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे|

यवाश्च रक्षन्त्वसुरान् दर्भा  रक्षन्तु राक्षसान्| पंक्तिर्वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः|



श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरं| ताभ्यां चैव नमस्कारं ततः श्राद्धं प्रवर्तते|

सप्तव्याधादशार्णेषु मृगाः कालन्जरे गिरौ| चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे|

तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणावेदपारगाः| प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ|

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च|नमः स्वाहायै स्वाहायै नित्यमेव नमो नमः| (३)

गयायै नमः| गदाधराय नमः|

गयायां पितृरूपेण स्वयमेव जनार्दनः| तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्|

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा|यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरःशुचिः||
( ततस्ताम्रपात्रे प्रणीतासंज्ञके शुद्धोदकमापूर्य  चन्दनपुष्पाक्षतांस्तत्रन्निक्षिप्य कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं संजप्य प्रदक्षिणमालोडयन् )
विनियोगः–एतोन्विन्द्रेति तिसृणां तिरश्च्यनुष्टुबिन्द्रः; तद्विष्णोः परमं पदमिति मेधातिथिः

नृचद्गायत्री श्राद्धपाकप्रोक्षणाय जलाभिमंत्रणे विनियोगः|

२३ २ ३ १ २ ३२ ३२३ १ २ ३२ ३ १ २३ १ २ ३२ ३१ २
ओम् एतोन्विन्द्र ँस्तवाम शुद्ध ँशुद्धेन साम्ना| शुद्धैरुक्थैर्वावृध्वास ँशुद्धैराशीर्वान्ममत्तु||
१ २ ३२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २ ३१ २र ३ १ २
इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरुतिभिः| शुद्धोरयिनिं धारय शुद्धो ममद्धि सोम्य||
१ २ ३ १ २र ३२ ३ १ २र ३ १ २३ २ ३१ २ ३ १ २र
इन्द्र शुद्धो हि नो रयि ँ शुद्धो रत्नानि दाशुषे|शुद्धोवृत्राणिजिघ्नसेशुद्धोवाज ँसिषाससि||
१ २र ३ २ ३१ २र ३ १२ ३ २ ३२३१ २
तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्||
१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२ ३२
तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते| विष्णोर्यत्परमं पदम्||
१२ ३१ २ ३ २३ १ २ ३२ ३ २उ ३ १
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे| पृथिव्या अधिसानवि||
(एभिर्मंत्रैर्जलमभिमंत्र्य कुशाग्रगृहितजलेन उपयोगक्रमेण श्राद्धसामग्रीं प्रोक्ष्य
भवतांप्रसादात्वैष्णवश्राद्धोपहाराणां पवित्रतास्तु; अस्तु|
देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु; अस्तु|

259

संकल्पः– अद्येत्यादि–––तिथौ0 दास्यमानदानांगत्वेनविहितं वैष्णवंश्राद्धं संकल्पश्राद्ध् विधिना अहं करिष्ये; कुरुष्व|

आसनदानम्|

भगवते विष्णवे इदमासनं स्वाहा; स्वासनमस्तु|

हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

गंधादिदानम्|

भगवते विष्णवे नमः अत्र० अयं वो गंधः; सुगंधः० यवमाच्छादनं० इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी;सुवाससी० इदं उपवीत; सूपवीतं०

अयं वो धूपः सुधूपः० इदं वो ज्योतिः;सुज्योतिः०शेषोपचारार्थे यवकुशाः सुकुशाः|

यथादत्तं गंधाद्यर्चनं भगवते विष्णवे स्वाहा–इदं विष्णवे नमम|

अस्य वैष्णवश्राद्धस्यार्चनविधेः सर्वं परिपूर्णं|

अन्नपरिवेषणम्ः|

१, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे यवान् विकीर्य; न्युब्जाभ्यां दक्षिणोत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वाहा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले|| ( विष्णोः हव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )

अन्नसंकल्पः|

इदं अन्नादियद् दत्तं यच्च दास्यमानं(दीयमानंवा) तत्सर्वं तृप्तिपर्यन्तं भोजनं भगवते विष्णवे स्वाहा–इदं विष्णवे नमम|( तूर्ष्णींसुसंप्रोक्षितमित्यादि )

( शिवा आपः सन्तु० सौमनस्यमस्तु० अक्षतं चारिष्टं चास्तु० समाचाराद् दीर्घमायुः शान्तिःपुष्टिस्तुष्टिस्चास्तु )

दक्षिणासंकल्पः|

–अस्यवैष्णवश्राद्धसांगतासिध्यर्थंइमांदक्षिणांमुखवासंचभगवतेविष्णवेस्वाहा–इदंविष्णवेनमम

|

संकल्पः– अद्यपूर्वोच्चरित०–––तिथौ दास्यमानदानांगत्वेन वैष्णवश्राद्ध कृतस्य विधेः सर्वं परिपूर्णमस्तु|



–अथ दानानि|

–गोदानम्|

संकल्पः– अद्येत्यादि–––तिथौ0 इदं गोदानं तन्निष्क्रयीभूतं मनसोद्दिष्टं द्रव्यं कस्मैचिद् ब्राह्मणाय तुभ्यमहं संप्रददे|

–पददानम्|

संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) इदं पददानं सोपस्करं गंधपुष्पाद्यर्चितम् अमुकगोत्राय अमुकशर्मणाय श्रेयसे तीर्थोपरि कृत संकल्प सिद्धयर्थं ( सव्यं ) अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे|

–एतद्दानप्रतिष्ठा सिद्धयर्थं इमां दक्षिणां तुभ्यमहं संप्रददे|

–शय्यादानम्| ( शय्यया उपरि लक्ष्मीनारायण मूर्त्योः पूजनम् )

विनियोगः–श्रीरसीति प्रजापतिर्यजुः लक्ष्मीः आवाहन स्थापने विनियोगः|

–ओम् श्रीरसि मयि रमस्व||

–ओम् भूर्भुवःस्वः लक्ष्मी इहागच्छइहतिष्ठ लक्ष्म्यै नमः लक्ष्मीम् आवाहयामि स्थापयामि|

विनियोगः–इदंविष्णुरिति मेधातिथिर्गायत्री विष्णुः आवाहन स्थापने विनियोगः|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

–ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले||

–ओम् भूर्भुवःस्वः विष्णो इहागच्छइहतिष्ठ विष्णवे नमः विष्णुम् आवाहयामि स्थापयामि|

(यथालाभोपचारैः ओम् भूर्भुवःस्वः लक्ष्मीनारायणाभ्यां नमः इति मन्त्रेण पूजयेत्)

संकल्पः– अनया पूजया ओम् भूर्भुवः स्वः लक्ष्मीनारायणौ प्रीयेताम् नमम|

( ततः श्रीफलेनार्घदानं–श्रीफलं गृहीत्वा चतरस्रः प्रदक्षिणाः कार्याः )

–पापोऽहं पापकर्माऽहं पापात्मा पापसंभवः; त्राहि मां पुंडरीकाक्ष सर्वपाप हरो भव|

यानि कानि च पापानि जन्मातर कृतानि च; तानि तानि विनश्यन्ति प्रदक्षिण पदे पदे|

अनेक जन्म सम्भूत पापहा परमेश्वर; मया दत्ताऽर्घदानेन भुक्ति मुक्ति प्रदो भव|

अमुकस्य भुक्तिं मुक्तिं च देहि||

( प्रतिग्रहीतृ ब्राह्मपूजनम् )

–अमुकगोत्रस्य शय्यादानप्रतिग्रहार्थं त्वामहंवृणे|(शिवाआपःसन्त्वित्यादिभिर्ब्राह्मणंसंपूज्य)

संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) इमां सारदारुमयीं हंसतूलीप्रतिच्छन्नां सुभगगण्डोपधानिकां प्रच्छादनपटीयुक्तां गंधधूपवासितां सप्तधान्यसहितां विश्वकर्मदैवत्यां गंधपुष्पाद्यर्चितम् अमुकगोत्रस्य अमुकशर्मणस्य परलोके अशून्यशयनप्राप्त्यर्थं सुखेन शयनार्थं तीर्थोपरि कृत संकल्प सिद्धयर्थं ( सव्यं )

अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय सपत्निकाय तुभ्यमहं संप्रददे|

–यथानकृष्णशयनं शून्यं सागरजातया; शय्या तथाप्य शून्यास्तु तथा जन्मनि जन्मनि|

–एतद्दानप्रतिष्ठा सिद्धयर्थं इमां दक्षिणां तुभ्यमहं संप्रददे|

–हिरण्यदानम्| ( प्रतिग्रहीतृ ब्राह्मपूजनम् )

संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) इदं हिरण्यदानं अग्निदैवतं अमुकगोत्रस्य अमुकशर्मणस्य परलोके विष्णुपदप्राप्तये ( सव्यं ) अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय

तुभ्यमहं संप्रददे|

–एतद्दानप्रतिष्ठा सिद्धयर्थं इमां दक्षिणां तुभ्यमहं संप्रददे|

–भूमिदानम्| ( प्रतिग्रहीतृ ब्राह्मपूजनम् )

संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) इमां भूमिदानं विष्णुदैवत्यां सर्वसस्यप्रदांसस्यवतीचेत् सर्वसस्यवती अमुकगोत्रस्य अमुकशर्मणस्य परलोके

विष्णुपदप्राप्तये ( सव्यं ) अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे|

–एतद्दानप्रतिष्ठा सिद्धयर्थं इमां दक्षिणां तुभ्यमहं संप्रददे|

–स्त्रीणांवंशपात्रीदानम्| ( प्रतिग्रहीतृ ब्राह्मपूजनम् )
संकल्पः– अद्येत्यादि–––तिथौ0 इमां वंशपात्रीं परिधान वस्त्रद्वयं कंचुकीसहितां सुवर्ण रजत निर्मित हस्तपादकंठकर्णभूषणसहितां कुंकुमसिंदूरकज्जलादि यथोपस्करयुतां मम इह जन्मनि जन्मातरे च अखंड सौभाग्य फलवाप्त्यर्थं अमुकगोत्राय अमुकशर्मणे

ब्राह्मणाय तुभ्यमहं संप्रददे|

–एतद्दानप्रतिष्ठा सिद्धयर्थं इमां दक्षिणां तुभ्यमहं संप्रददे|



–दूर्वाष्टमिदानम्| ( प्रतिग्रहीतृ ब्राह्मपूजनम् )
संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) इदं वंशपात्रं कांस्यपात्र विविध फल कटिं सूत्र नानोपहार वस्त्रादि संयुक्तं गंधपुष्पाद्यर्चितं अमुकगोत्रस्य अमुकशर्मणस्य परलोके पंगुदोष निवारणार्थं वंशपात्र जनित सुखावाप्तये ( सव्यं ) अमुकगोत्राय

अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे|

–एतद्दानप्रतिष्ठा सिद्धयर्थं इमां दक्षिणां तुभ्यमहं संप्रददे|

–दीपदानम्|
संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) इमं दीपं परम ज्योतिरूप नारायणाधिदैवतं अमुकगोत्रस्य अमुकशर्मणस्य परलोके तमो निवृत्यर्थं अमुकगोत्राय

अमुकशर्मणे स्वधा इदं पित्रे नमम|
( सव्यं )

– मकरसंक्रांतिदानम्| ( प्रतिग्रहीतृ ब्राह्मपूजनम् )
संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) इदं मृद्भांडंसान्नं इक्षु तिल मोदकादि सहितं विश्वकर्मदैवत्यां गंधपुष्पाद्यर्चितं अमुकगोत्रस्य अमुकशर्मणस्य परलोके

सुखावाप्तये ( सव्यं ) अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे|

–एतद्दानप्रतिष्ठा सिद्धयर्थं इमां दक्षिणां तुभ्यमहं संप्रददे|

– अक्षयतृतीयादानम्| ( प्रतिग्रहीतृ ब्राह्मपूजनम् )

संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) इदं वर्द्धन्यः सजलासफलाः सान्नाः सवस्त्र गंधोदक तिल मिश्रा वरुणाधिदैवता अमुकगोत्रस्य अमुकशर्मणस्य परलोके क्षुतृष्णा निवृत्यर्थं च गंधपुष्पाद्यर्चितम् सदक्षिणाकं ( सव्यं ) अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे|

–एतद्दानप्रतिष्ठा सिद्धयर्थं इमां दक्षिणां तुभ्यमहं संप्रददे|

–पन्थिदानम्| ( प्रतिग्रहीतृ ब्राह्मपूजनम् )

संकल्पः– अद्येत्यादि–––तिथौ0 ( अपसव्यं ) इदं पन्थिदानं भक्ष्य भोज्य वस्त्रादि सहितं अमुकगोत्रस्य अमुकशर्मणस्य परलोके शीततप्त कंटकादि दुःख निवृत्यर्थं क्षुत्तृषा निवृत्यर्थं च गंधपुष्पाद्यर्चितम् सदक्षिणाकं ( सव्यं ) अमुकगोत्राय अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे|

–एतद्दानप्रतिष्ठा सिद्धयर्थं इमां दक्षिणां तुभ्यमहं संप्रददे|

263

–स्थापित देवतानां विसर्जनम्|

विनियोगः– सुतासो मधुमत्तमाः इति ययातिर्नाहुषः अनुष्टुप् पवमानः सोमः देवता विसर्जने विनियोगः|

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १२ ३१ २ ३ १२

ओम् सुतासोमधुमत्तमाः सोमा इन्द्राय मन्दिनः|पवित्रवन्तोअक्षरन्देवान्गाच्छन्तुवोमदाः||

विनियोगः– सुतासोमा३हा इति त्वष्टारनुष्टुप् सोमः देवता विसर्जने विनियोगः|

१ र र ३२ १ १र र २ २ ३२ १ १ २ २

ओम् सुतासोमाऽ३हा| धुमत्तामाऽरः| सोमाइन्द्राऽ३हा| यमन्दायिनाऽरः| पवित्रवा३हा|

३र२१ १र र २ २ ३ २ १ ५ ४ ५

तोअक्षाराऽरन्| देवान्गाच्छाऽ३हा| तुवोऽ३होऽ२३४वा| माऽ५होऽ६हायि||

( ततः श्राद्धकर्ता ललितादित्र्योदशदेवतायाः स्थापितं कलशं स्वस्कन्धे स्वगृहाद्बहिः निम्बमूलेऽश्वत्थवृक्षमूले मार्गे वा कलशजलं स्वपृष्ठभागेन क्षिपेत् )

–यद्बाल्येयच्च कौमारे वार्द्धक्ये चापियत्कृतम्; तत्सर्वं नाशमायातु ऋणं देवर्षिपैतृकम्|
इमं मे समयं पूर्ण तारय स्व भवार्णवात्; अनृणो गन्तुमिच्छामि तद्विष्णोः परमं पदम्|
अथाहूय द्विजवरं यजमानः स्वयं वदेत्; ब्रूहि ब्राह्मण तं मंत्र रुणं ये न क्षयं भवेत्|
मम शीर्षा श्रवणिकामुत्तारय स्व सांप्रतं; उत्तारयति मंत्रेण ब्राह्मणो वर्द्धनीं ततः|

अमुष्य शिरसो देवि उत्तीर्यारुरुहद्गुमं; कटुकं निम्बवृक्षं च ततो मधुर मारुह|
अथ गच्छ महादेवि देवलोकं सनातनं; ममापि देवलोकोस्तुत्वत्प्रसादात् सुरेश्वरि|
(ततस्तंकलशं पृष्ठ भागेनिनीय पृष्ठमनवलोकं स्वस्थानमागत्यआचम्यपरिपूर्णतांप्राथयेत्)

संकल्पः– अद्येत्यादि–––तिथौ0 श्रवणादीनां पूजन कृतस्य विधेर्यन्यूनमतिरिक्तं तत्सर्वं श्रीविष्णोः प्रसादात् सन्निहित ब्राह्मणानां प्रसादात् परिपूर्णमस्तु|

( तत गृहमागत्य स्नात्वा (पाथेयश्राद्धंकृत्वा) नूतने वस्त्रोपवस्त्रे धृत्वा अशुभनिवृत्यर्थं शुभफलप्राप्ताख्यं कर्म कुर्यात् )



संकल्पः– अद्येत्यादि–––शुभपुण्यतिथौ0 मम गृहे सकुटुम्बस्य सपरिवारस्यमे सर्वारिष्टोपशांतये क्षेमायुरारोग्य सिद्धयर्थं गणेशपूजनपूर्वकं स्वस्तिवाचनमहं करिष्ये|

**–गणपतिपूजनम्|**

विनियोगः– आतून इति कुसीदी गायत्री गणपतिः ध्याने विनियोगः|

१ २र ३ १ २ ३ २ ३ १ २र ३ १ २र

–ओम् आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभ ँ सं गृभाय| महाहस्ती दक्षिणेन||(४)

विनियोगः–आतूनइति पूर्वद्वयोर्गौरीवितिर्गायत्री; उत्तरद्वयोराकूपारोगायत्री गणपतिःध्यानेविनियोगः|

५र र २१ २ १ २र१ २ १ १

–ओम् आतूनआ| द्रक्षुमाऽ२३न्ताम्| चाइत्रंग्राभाऽ२३ ँहाइ| संगृऽरभाया|

२र ३ ५ १ १ १ ३ ५रर

महाहस्तोऽ२३४हाइ| दक्षाऽरइणाइना| महाऽ२३| हाऽ२स्ताऽ२३४औहोवा|

१ २ १ १११

दक्षिणेऽ३नाऽ२३४५||

५रर ४ ५ १ ३ ५ २ ३ ५ ६ २

–आतूनइन्द्रक्षुमान्ताम्| चित्राऽ२ङ्ग्राऽ२३४भाम्| संगृभाऽ२३४या| माऽ३हाऽ३|

१    ३    ५रर    १ २ र३    १११
हाऽ२स्ताऽ२३४औहोवा| दक्षिणेनाऽ२३४५||
४र र५४  ५    ५    २१ र    १  २ १ र    २  २
—आतूनइ| द्रक्षुमाऽ६न्ताम्| चित्रंग्राभँसंगृभाऽरया| चित्रंग्राभँसम्|गृ|औऽ३होइ|
३    ५  २र१   र   र    १  २र१ ३रर    ५ ४    ५
भाऽ२३४या| ऐहोइ|महाहस्तीदक्षाऽ२३होइ|औहो|वाहोऽ२३४वा|णाऽ५इनोऽ६हाइ||
५र र    ५   २ १ र    र   २ १ र    २   ५
—आतूनइन्द्रक्षुमाऽ६न्ताम्| चित्रंग्राभँसंगृभाया| चित्रंग्राभँसम्| गृऽ२३|ईऽ३४हा|
३    ५  २र१    र  र    १  २र१ ३रर    ५ ४    ५
भाऽ२३४या| ऐहोइ|महाहस्तीदक्षाऽ२३होइ|औहो|वाहोऽ२३४वा|णाऽ५इनोऽ६हाइ||

—ओम् भूर्भुवःस्वः सिद्धिबुद्धिसहितश्रीमन्महागणपतये नमः ध्यायामि; ध्यानार्थे अक्षतान् समर्पयामि|

—ओम् भूर्भुवःस्वः सिद्धिबुद्धिसहितश्रीमन्महागणपतिः सुप्रतिष्ठितो वरदो भव|

(ओम भूर्भुवःस्वःसिद्धिबुद्धिसहितश्रीमन्महागणपतयेनमः इति मन्त्रेण यथालाभोपचारैः सम्पूज्येत् )

— अनेन पूजनेन ओम् भूर्भुवःस्वः सिद्धिबुद्धिसहितश्रीमन्महागणपतिः प्रीयन्ताम् नमम|

265

—अथ कलशस्थापनम्|

१, विनियोगः— भूमिरिति इन्द्रो यजुश्च्छन्दः भूम्यादयो देवता भूम्यभिमन्त्रणे विनियोगः|

१र    २ १  २    १    २    ५रर    २   २र१र  ११११
ओम् भूमिः|(३) अन्तरिक्षम्|(३) द्यौः|(२) द्याऽ३४| औहोवा| एऽ३| भूताया२३४५||

२, विनियोगः— आविशन्निति जमदग्निर्भार्गवः गायत्री पवमानः सोमः कलशस्थापने विनियोगः|

३  २  ३१ २  ३२उ    ३ १ २३ १   २र  २ ३१ २
ओम् आविशन्कलशँ सुतो विश्वा अर्षन्नभि श्रियः| इन्दुरिन्द्राय धीयते||

<u>विनियोगः</u>— आविशन्निति उशना गायत्री सोमः कलशस्थापने विनियोगः|

५र र ५ १ २र १२ १ २ ३न २ १ २

ओम् आविशन्कालाऽ६श ँसुताः|वाइश्वाअर्षन्|अभाइश्रायाऽ३ः|ओऽ३हाऽ३|ओवा|

३ ५ १ १ ३ ५रर २ र ३ ११११

ओऽ२३४हाइ| इन्दूऽ२३ः| आऽ२इन्द्राऽ२३४औहोवा| यधीयतेऽ२३४५||

<u>३, विनियोगः</u>—समन्यायन्त्युइति गृत्समदः शौनकःत्रिष्टुप् अपांगपातः जलपूरणेविनियोगः|

२३ १ २र ३ १ २३ २३२ ३क२र

<u>ओम् समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति|</u>

२३ २ ३ १ २ ३ १ २३ १ २र३१२ ३ १ २

<u>तमू शुचि ँ शुचयो दीदिवा ँ समपान्नपातमुप यन्त्यापः||</u>

266

<u>विनियोगः</u>—अपांसमन्यायन्त्युइति गृत्समदः शौनकःत्रिष्टुप्अपांगपातः जलपूरणेविनियोगः|

२र १र २ १ र २ २र १र २ र र र

ओम् हाउ|(३) ऐरयत्|(३) अपःसमैरयत्|(३) भूतमैरयत्|(३) अपांगर्भोग्निरिडा|

र र र २ र र र १ र २१ २

पांगर्भोग्निरिडा|(२) पृथिव्यागर्भोग्निरिडा|(३) समन्यायन्त्युपयन्तियाऽ२३न्याः|

र १र २ १ २ १ र र र२ १ २

समानमूर्वंनद्यस्पृणाऽ२३न्ती| तमूशुचिँ शुचयोदीदिवाऽ२३ँ साम्|
१ र र २ १ २
अपान्नपातमुपयन्तियाऽ२३पा३ः|
२र १र २ १ र २ २र १र २ र र र
हाउ|(३) ऐरयत्|(३) अपःसमैरयत्|(३) भूतमैरयत्|(३) अपांगर्भोग्निरिडा|
र र र २ र र र २ र र २
पांगर्भोग्निरिडा|(२) पृथिव्यागर्भोग्निरिडा|(२) पृथिव्यागर्भोग्निरिडाऽ३हाउवा|
२र १ २ १ २र १ २ १ २र१र २१ २ १ २र १र २१र र २र
ए|अग्निःशिशुक्वः|ए|शुक्रःशिशुक्वः|ए|तेजःशक्रस्यशक्वम्|ए| तेजःसप्राःसमीचीः|
२र १र२१ २र१२र१ २र १ र ३ १११
ए| तेजऊषोनजारः| ए| सुवर्ज्योतीऽ२३४५ः||

४, विनियोगः—त्वमिमा ओषधीरिति गौतमोराहूगणः त्रिष्टुप् सोमः ओषधिप्रक्षेप ेविनियोगः|

२ ३ १ २र ३ २ ३ २३ १ २ ३ २
ओम् त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः|
१ २र ३ २ १ २३ १ २र ३ १ २र
त्वमातनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ|



विनियोगःत्वमिमाओषधीरितिगौतमोराहूगणःत्रिष्टुप्सोमःओषधिप्रक्षेपेविनियोगः|
२र ३र २ २र ४ २ १११ ४ २
ओम् हाउ|(३)हौवा|(३)हाह|हौवा|(३)होवाऽ३|(३)होऽ३वाऽ३४५|(२) होऽ३वाऽ३४|

५ूरर १ र २र र १ २र १ २१र २ १ र

औहोवा| त्वमिमाओषधीःसोमविश्वा| त्वमपोअजनयस्त्वङ्गाः|

र २र १ २ १ र २र१ र २

त्वमातनोरुर्वन्तरिक्षम्| त्वन्ज्योतिषावितमोववर्थ|

२र ३र २ २र ४ २ १११ ४ २

हाउ|(३) हौवा|(३) हाह|हौवा|(३) होवाऽ३|(३) होऽ३वाऽ३४५|(२) होऽ३वाऽ३४|

५ूरर २र १ २ १ २ १र २ १ र २ १ र२र र

औहोवा| ए| जनदिवमन्तरिक्षम्पृथिवींविश्वभोजसम्पुरूरूपाअजीजनः|

१

इट्इडाऽ२३४५||

५, विनियोगः—स्योनापृथिवीति मेधातिथिः पर उष्णिक् पृथिवी मृत्तिकाप्रक्षेपे विनियोगः|

ओम् स्योना पृथिवी नो भवानृक्षरा निवेशनी| यच्छानः शर्म सप्रथो देवान् मा भयादिति||

६,विनियोगः—चन्द्रमाअप्सवन्तरेति त्रितःआप्स्यः पंक्तिः विश्वेदेवाः हिरण्यप्रक्षेपेविनियोगः|

३ १ २ ३ २ १ २र३ १ २ ३ २

ओम् चन्द्रमा अप्स्वांऽ३न्तरा सुपर्णो धावते दिवि|

१ २ ३ १ २ ३ १ २ ३ १ २

न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी||

विनियोगः—चन्द्रमा अप्स्वन्तरेति त्रितः पंक्तिरिन्द्रः हिरण्यप्रक्षेपे विनियोगः|

२ १ र २ १ २ १र२ २१र र २

ओम् चन्द्रमाआउवा| प्सुवान्तराउवा| सुपर्णोधाउवा| वतेदिवी| नवोहिराउवा|

१ २ १ २ १ २ १र २

ण्यनाइमायाउवा|पदंविन्दाउवा|तिविद्युताः|वित्तम्माआउवा|स्यरोदाऽ२३सा३४३इ|

१

ओऽ२३४५इ| डा||

७,विनियोगः—परिवाजपतिरितिवामदेवोगौतमःगायत्र्यग्निःपन्वरत्नप्रक्षेपेविनियोगः|

२३ १ २ ३२ ३ २३ १ २ २३ १ २ ३१ २

ओम् परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत्| दधद्रत्नानि दाशुषे||

विनियोगः—परिवाजपतिरिति वामदेवो गायत्र्यग्निः पन्वरत्नप्रक्षेपे विनियोगः|

४५र ४ ५ २१ २ १ २ र १ अ १

ओम् पर्यौ|होयिवाजा|पतायिःकाऽ१वीऽरः|आग्निर्हव्या|नायक्रमीऽरत्|दधाऽ२३त्|

१ ३ ५रर २ र १३ ११११

रा२त्नाऽ२३४औहोवा| निदाशुषेऽ२३४५||

८,विनियोगः—इदं वसोरिति मेधातिथिः काण्वः प्रियमेधाश्चांगिरसः गायत्री त्रिशोकः काण्वः वस्त्रवेष्टने विनियोगः|

३ १ २ ३२उ ३ २३ १२ ३१२ १ २ ३ १ २

ओम् इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम्| अनाभयिन्ररिमा ते||

विनियोगः—इदं वसोरिति गरो गायत्रीन्द्रः वस्त्रवेष्टने विनियोगः|

५ २ १ २ १विर र २१ २

ओम् इदंवसाउ| सुतमाऽ२३न्धाः| पिबाऽ२सुपू| णमुदाऽ२३राऽ३४म्|

३ २ ३ २ ४ ५ ४ ″५

अनाऽ३४भयाऽ३इन्| ररोवा| माऽ५तोऽ६हाइ||

९,विनियोगः—अयमूर्जेति प्रजापतिरनुष्टुप्उदुम्बरः पन्चपल्लवनिधानेविनियोगः|

ओम् अयमूर्जावतो वृक्ष ऊर्जीवफलिनीभव|पर्णंवनस्पतेनुत्वानुत्वासूयता ँरयिः||

१०,विनियोगः—सघातमितिगोतमोराहूगणःपंक्तिःअग्निःपूर्णपात्रनिधानेविनियोगः|

२ ३ १ २र३ २३१ २ ३ १ २

ओम् स घा तं वृषण ँ रथमधि तिष्ठाति गोविदम्|

१ २र ३२ ३ १२ ३ १ २ ३ २३क २र ३ १ २

यः पात्रँ हारियोजनं पूर्णमिन्द्राचिकेतंति योजा न्विन्द्र ते हरि||

269

विनियोगः—सघातमिति लुशः पंक्तिरिन्द्रः पूर्णपात्रनिधाने विनियोगः|

३४र ३ ४५ ३ २ ३र४र५ १ २ र १ २ १र १

ओम् सघातंवृषणम्|रथाऽ३४औहोवा|आधितिष्ठा|तिगोवाऽ१इदाऽरम्|यःपात्रँहा|

अ ३ ५ २र१ २ ३ ५ १र २ २

रियोऽ२जाऽ२३४नाम्| पूर्णमि| द्रा| चीकेताऽ२३४ती| योजानूऽ३वाऽ३इ|

१ ३ ५रर ३ ५

द्राऽ२ताऽ२३४औहोवा| हाऽ२३४री||

विनियोगः—यदाकदेति वज्रो बृहति वरुणः वरुण आवाहने विनियोगः|

३ २ ३ १ २ ३ १२ ३ १ २ २ ३ १ २

ओम् यदा कदा च मीढुषे स्तोता जरेत मर्त्यः|

१ २र ३ १२ ३ २ ३ २ ३ २३ १ २

आदिद्वन्द्वेत वरुणं विपा गिरा धर्त्तारं विव्रतानाम्||

विनियोगः—यदाकदेति वज्रो बृहति वरुणः वरुण आवाहने विनियोगः|

५ र १ ३ ५र र ३ ५ २र१र २र १२ १ २

ओम्यदाकदा|चाऽ२माऽ२३४औहोवा|ढूऽ२३४षे|स्तोताजरेतमर्तियऽ३ः|आदिद्वन्दे|

१ अ ३ २ ३ २१ २र१ १ ३ ५रर

तावरुणाऽ२३४म्|विपाऽ३४गिरा|धार्त्तारांवी२३|व्राऽ२ताऽ२३४औहोवा|

३ १११

नाऽ२३४५म्||

विनियोगः— वाक्मनः प्राणेति ऋतवोऽनुष्टुप् सूर्यः प्रतिष्ठापने विनियोगः|

१ १ २र१ २र१र २र१र २र१ २ १र२ १२ १२ १र २ १र

ओम् वाक्|मनः प्राणः प्राणो पानो व्यानश्चक्षुः श्रोत्रॅं शर्म वर्म भूतिः प्रतिष्ठा||
ओम् एता एव समहाव्रताः सर्वावा एता विराजो दशिनी प्रथमा विँ शिनी द्वितिया त्रिँ शिनी तृतीयैषा वै परमाविराड् यच्चत्वारिँ शद्रात्रयः पंक्तिर्वै परमा विराट् परमायेव विराजि प्रतितिष्ठन्ति|

ओम् वरुणः सांगः सपरिवारः सुप्रतिष्ठितो वरदो भव| ( यथालाभोपचारैः वरुणं संपूज्य्)

संकल्पः– अनेन मत्कृतेन पूजनेन वरुणः सांगः सपरिवारः प्रीयताम्|



( कलशं स्पृष्टवा–ध्यायेत् )

कलशस्यमुखेविष्णुः कण्ठे रुद्रः समाश्रितः; मूले तस्य स्थितो ब्रंह्मा मध्येमातृगणाःस्मृताः|

कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा; ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः|

अंगैश्चसहिताः सर्वे कलशन्तु समाश्रिताः; अत्र गायत्री सावित्री शान्ति पुष्टिकरीतथा|

सर्वे समुद्राः सरितः तीर्थानि जलदा नदाः; आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः|
( प्रार्थयेत् )

देवदानव संवादे मथ्यमाने महोदधौ; उत्पन्नोऽसि तदाकुम्भ विधृतो विष्णुना स्वयम्|

त्वत्तोयेसर्वतिर्थानिदेवाः सर्वे त्वयि स्थिताः; त्वयि तिष्ठन्ति भूतानित्वयिप्राणाःप्रतिष्ठिताः|

शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः; आदित्या वसवो रुद्रा विश्वेदेवाःसपैतृकाः|

त्वयि तिष्ठन्ति सर्वेऽपि यतः काम फलप्रदाः; त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव|

सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा|

सम्पूज्य गन्धमाल्याद्यैर्ब्राह्मणान् स्वस्ति वाचयेत्; धर्म कर्मणि मांगल्ये संग्रामाद्भूतदर्शने|

पुण्याहवाचनं दैवे ब्राह्मस्य विधियते; एतदेव निरोंकारं कुर्यात् क्षत्रियवैश्ययोः|

पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक; पुण्याहवाचनं यावत् तावत्त्वं सन्निधो भव|

– अवनीकृतजानुमण्डलः कमलमुकुलसदृशमन्जलिं शिरस्याधाय दक्षिणेन पाणिना स्वर्णः पूर्णं कलशं धारयित्वा|

–ओम् दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु इति भवन्तो ब्रुवन्तु| तेनायु प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु| (३)

– भो ब्राह्मणाः मम गृहे ओम् पुण्याहं भवन्तो ब्रुवन्तु–ओम् अस्तु पुण्याहं|३|

– भो ब्राह्मणाः मम गृहे ओम् कल्याणं भवन्तो ब्रुवन्तु–ओम् अस्तु कल्याणं|३|

– भो ब्राह्मणाः मम गृहे ओम् ऋद्धिं भवन्तो ब्रुवन्तु–ओम् कर्मऋद्धयतां|३|

– भो ब्राह्मणाः मम गृहे ओम् स्वस्तिं भवन्तो ब्रुवन्तु–ओम् आयुष्मते स्वस्ति|३|

– भो ब्राह्मणाः मम गृहे ओम् श्रीरस्त्विति भवन्तो ब्रुवन्तु–ओम् अस्तु श्रीः|३|

– अनेन पुण्याहवाचनेन पितरः प्रीयन्ताम् नमम|

**|| इति त्र्योदशाहश्राद्ध प्रयोगः ||**



## || अथ पाथेय श्राद्ध प्रयोगः ||

( सव्यं )

-तिथिर्विष्णुस्तथा वारो नक्षत्रं विष्णुरेव च; योगश्च करणं चैव सर्वं विष्णुमयं जगत्|

संकल्पः–ओम् विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्री ब्रह्मणो द्वितीये परार्धे अह्वो द्वितीये यामे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भारतवर्षे भरतखण्डे जम्बुद्वीपे आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे कन्याकुमारिकानाम्नि क्षेत्रे अमुकनद्याःतीरे शालिवाहनशके बौद्धावतारे अस्मिन् वर्तमाने अमुकनामकेसंवत्सरे अमुकायनगते मार्तण्डमण्डले अमुकऋतौ शुभकारिणि अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकदिवसनक्षत्रे अमुकराशिस्थितेचन्द्रे अमुकराशिस्थितेसूर्ये अमुकराशिस्थितेदेवगुरौ शेषेषु ग्रहेषु यथायथं

राशिस्थानस्थितेषु सत्सु एवं गुणगणविशेषेण विशिष्टायां शुभपुण्यतिथौ पुरुरवार्द्रव संज्ञकानां विश्वेषां देवानां ( अपसव्यम् ) अमुकगोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां पार्वण विधिना  मम पितुः मनुष्यलोकात् पितृलोकगमने सुखावाप्त्यर्थं पाथेयश्राद्ध एकतन्त्रेणमहं करिष्ये|

( सव्यं )

संकल्पः– अद्येत्यादि०–––शुभपुण्यतिथौ ( अपसव्यम् ) मम पितुः करिष्यमाण पाथेयश्राद्धांगभूतं ( सव्यं ) श्री विष्णोः यथालाभोपचारैः पूजनं करिष्ये|

( ताम्रपात्रे शुद्धोदकमापूर्य तत्र गंधादिनिक्षिप्य गायत्र्यादिमंत्रैः स्तजलमभिमंत्र्यतेनजलेन पूजासामग्रींसंप्रोक्ष्य प्रार्थयेत्; विष्णुपूजोपहाराणां पवित्रतास्तु )

संकल्पः–पूजन अधिकारार्थं पुरुषसूक्तेन( नाममन्त्रेण ) देहन्यासान् करिष्ये|(नाममंत्रेण देहन्यासान्)

ओम्– अंगुष्ठाभ्यां नमः० नमो–तर्जनीभ्यां नमः० भगवते–मध्यमाभ्यां नमः०

वासुदेवाय– अनामिकाभ्यां नमः० नमः–कनिष्ठिकाभ्यां नमः०

ओम्नमोभगवतेवासुदेवायनमः–करतलकरपृष्ठाभ्यां नमः|

ओम्–हृदयाय नमः० नमो–शिरसे स्वाहा० भगवते–शिखायै वषट्०

वासुदेवाय–कवचाय हुम्० नमः–नेत्रत्रयाय वौषट्०

ओम्नमोभगवतेवासुदेवायनमः– अस्त्राय फट्|

विनियोगः–ओम् इदं विष्णुरित्यादिनां षण्णां मेधातिथिः ऋषिः गायत्रीछन्दः विष्णुरिन्द्रश्च देवता; सहस्त्रशीर्षेति पन्चानां नारायणः ऋषिः अनुष्टुप्छन्दः पुरुषो देवता; सोमः पवतेति वशिष्ठः ऋषिः त्रिष्टुप्छन्दः विश्वेदेवा देवता; किमित्तेतित्रयाणां वशिष्ठः ऋषिः त्रिष्टुप्छन्दः विष्णुर्देवता; प्रथश्चेत्यस्य प्रथः ऋषिः त्रिष्टुप्छन्दः धाता सविता विष्णुर्वादेवता पुरुषसूक्तेन न्यासे ( पूजने च ) विनियोगः|



१, आवाहनम्|

३२उ    ३१  २    ३ १    २र  ३२  १२         ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्|समूठमस्य पाँसुले||(वामहस्ते–डाबाहाथे)

२, आसनम्|

१ २  ३१   २र  ३ १ २ ३ १   २र    २ ३१२   ३ १२

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः| अतोधर्माणिधारयन्||(दक्षिणहस्ते–जमणाहाथे)

३, पाद्यम्|

२ ३   १२        ३ १ २ ३ १२    ३२  १२ ३  २ ३ १ २

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे| इन्द्रस्य युज्यःसखा|| (वामपादे–डाबापगे)

४, अर्घ्यम्|

१ २र ३२ ३१ २र ३ १२ ३ २३ २३१ २

तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्|| (दक्षिणपादे–जमणापगे)

५, आचमनीयम्|

१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२३२

तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते|विष्णोर्यत्परमंपदम्||(वामजानुनि–डाबाठींचणे)

६, स्नानम्|

१२ ३१ २ ३ २३ १ २ ३२ ३ २उ३ १ २

अतो देवा अवन्तु नोयतोविष्णुर्विचक्रमे|पृथिव्याअधिसानवि||(दक्षिणजानुनि–जमणाठींचणे)

७, वस्त्रम्|

३१ २ ३ १२ ३ २ ३१ २

सहस्त्रशीर्षाः पुरुषः सहस्त्राक्षः सहस्त्रपात्|

१र २र ३ १ २ ३ १ २ ३ २

स भूमि ँ सर्वतो वृत्वा त्यतिष्ठद्दशा ँ गुलम्|| ( वामकट्याम्–डाबीकमरे )



८, उपवीतम्|

३ २ ३२उ ३ १२३ १ २ ३ १२ ३१ २

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः|

२ ३ २३क २र ३२ ३ २

तथा विष्वङव्यक्रामदशनानशने अभि|| ( दक्षिणकट्याम्–जमणीकमरे )

६, गंधम्|

१२ ३२उ ३ २ ३२उ ३ १ २

पुरुष एवेदँ सर्वं यद्भूतं यच्च भाव्यम्|

१ २ ३ १ २३ १२ ३ १२ ३ १२ ३ २

पादोऽस्य सर्वाभूतानि त्रिपादस्या मृतं दिवि|| ( नाभौ–नाभिए )

१०, पुष्पम्|

१ २ ३२र ३ १ २ ३ १२ ३ १२३ १ २र३१ २र ३ १२

तावानस्य महिमा ततो ज्यायाँ श्च पूरुषः|उतामृतत्वस्येशानोयदन्ने नातिरोहति||(हृदये)

११, धूपम्|

१ २ ३ १२ ३२ ३ २ ३ १२ २३ १ २र ३२उ ३ १२ ३२

ततो विराडजायत विराजो अधि पुरुषः| सजातो अत्यरिच्यतपश्चाद्भूमिमथो पुरः||(कंठे)

१२, दीपम्|

१ २ ३ १ २३ १ २३ २ ३ १ २ ३ १ २३ २

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः|

३ १ २र३१ २र ३१ २ ३ १ २र

जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः|| ( वामबाहौ–डाबाखभे )

१३, नैवेद्यम्|

१ २र ३२ ३ २ ३ १ २र३१ २ ३ १ २

किमित्ते विष्णो परिचक्षि नाम प्रयद्ववक्षे शिपिविष्टो अस्मि|

१ २र ३ १ २र ३२र१३ १२ ३ २ ३१ २

मावर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ|| ( दक्षिणबाहौ–जमणाखभे )

१४, दक्षिणा–तांबूलम्।

१  २र३ १  २  ३२ ३१  २  ३१ २  ३ २

प्रतत्ते अद्य शिपिविष्ट हव्यमर्यः श ँ सामि वयुनानि विद्वान्।

१  २  ३२३ १२ ३ १ २  ३ १  २र  ३  २

तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके।। ( मुखे )

१५, प्रदक्षिणाम्।

१२  ३ १  २र  ३  १ २  ३ २

वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।

१  २  ३ २३  १ २  ३ १ २  ३ २  ३  १ २

वर्धंतु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः।। ( नेत्रयोः )

१६, नमस्कारः।

१२ ३  १ २ ३ १२ ३  १  २र  ३ १२  ३२

प्रथश्च यस्य सप्रथश्च नामानुष्टु भस्य हविषो हविर्यत्।

३ १  २र  ३२ ३  १ २  ३१  २र  ३  १२

धातुर्द्युतानात्सवितुश्च विष्णो रथंतर माजभारा वसिष्ठः।। ( मूर्ध्नि–मस्तके )

संकल्पः–श्री विष्णोः यथालाभोपचार–पूजनविधेः परिपूर्णतास्तु।

क्षणदानम्|

( सव्यं ) ( यवानादाय )

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः देवकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
दैवे क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
पुरुरवार्द्रवसंज्ञकाः विश्वेदेवाः एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र|
चंदनं पुष्पं|

( अपसव्यं ) ( तिलानादाय ) ( पृथक्पृथक् एकतंत्रेण वा )

१, अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
अमुकगोत्र पितः अमुकशर्मन् वसुरूप एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं|
इदमत्र| चंदनं पुष्पं|

२, अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
अमुकगोत्रस्य पितामह अमुकशर्मन् रुद्ररूप एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं|
एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|

३, अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं| पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|

अमुकगोत्र प्रपितामह अमुकशर्मन् आदित्यरूप एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|

276

अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुकामुकामुकशर्माणः वसुरुद्रादित्यरूपा एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|

( सव्यं ) आचमनं|
ओम् भूर्भुवः स्वः समाध्वं; ओम् समास्म्हे|
( अपसव्यं )
ओम् भूर्भुवः स्वः समाध्वं; ओम् समास्म्हे|
( सव्यं ) आचमनं| प्राणायामः|
गायत्रींगायत्रंचसामपठेत्|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

१ र १ र र र २१र र २ १ १

ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियो योनः प्रचोऽ१२१२| हुम्| आऽर|

१ १११

दायो| आ२३४५||

( अपसव्यं )
प्रसादं कृत्वा श्राद्धं कारयध्वं; कुरुष्व| ( कुशतिलप्रक्षेपेणदिग्बंधः )
अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्|
तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः|
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः| ऊर्ध्वतस्त्वर्यमा रक्षेत् कव्यवालनलोप्यधः|
रक्षोभूतपिशाचेभ्यः तथैवासुरदोषतः| सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे|

तिलाश्च रक्षन्त्वसुरान् दर्भा  रक्षन्तु राक्षसान्| पंक्तिर्वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः|



( सव्यं ) अस्तु|
`श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरं| ताभ्यां चैव नमस्कारं ततः श्राद्धं प्रवर्तते|
सप्तव्याधादशार्णेषु मृगाः कालन्जरे गिरौ| चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे|
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणावेदपारगाः| प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ|
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च| नमः स्वाहायै स्वधायै नित्यमेव नमो नमः| (३)
गयायै नमः| गदाधराय नमः|
गयायां पितृरूपेण स्वयमेव जनार्दनः| तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्|
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपिवा|यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः|
( ततस्ताम्रपात्रे प्रणीतासंज्ञके शुद्धोदकमापूर्य  यवतिलगंधादीन्निक्षिप्य कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं संजप्य प्रदक्षिणमालोडयन् )
विनियोगः—एतोन्विन्द्रेति तिसृणां तिरश्च्यनुष्टुबिन्द्रः; तद्विष्णोः परमं पदमिति मेधातिथिः नृचद्गायत्री श्राद्धपाकप्रोक्षणाय जलाभिमंत्रणे विनियोगः|

२३ २ ३ १ २ ३२ ३२३ १ २ ३२ ३ १ २३ १ २ ३२ ३१ २
ओम् एतोन्विन्द्र ँस्तवाम शुद्ध ॅशुद्धेन साम्ना| शुद्धैरुक्थैर्वावृध्वास ँ्शुद्धैराशीर्वान्ममत्तु||
१ २ ३२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २ ३१ २र ३ १ २
इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरुतिभिः| शुद्धोरयिनिं धारय शुद्धो ममद्धि सोम्य||
१ २ ३ १ २र ३२ ३ १ २र ३ १ २३ २ ३१ २ ३ १ २र
इन्द्र शुद्धो हि नो रयि ँ शुद्धो रत्नानि दाशुषे|शुद्धोवृत्राणिजिघ्नसेशुद्धोवाज ँसिषाससि||
१ २र ३ २ ३१ २र ३ १२ ३ २ ३२३१ २
तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्||
१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२ ३२
तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते| विष्णोर्यत्परमं पदम्||
१२ ३१ २ ३ २३ १ २ ३२ ३ २उ ३ १
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे| पृथिव्या अधिसानवि||
(एभिर्मंत्रैर्जलमभिमंत्र्य कुशाग्रगृहितजलेन अपसव्येन श्राद्धोपहारान्पाकांश्चप्रोक्षेत् )

( अपसव्यं )
क्षुद्रदृष्टिनिपतिताः पाकादिदोषाः पाकादिनां पवित्रतास्तु; अस्तु|

( सव्यं )
भवतांप्रसादात्श्राद्धोपहाराणां पाकादीनां पवित्रतास्तु; अस्तु|
देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु; अस्तु|

संकल्पः– अद्येत्यादि शुभपुण्यतिथौ ( अपसव्यं ) अमुकगोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां पाथेय श्राद्धं विश्वेदेवा पूर्वकं अर्ध्यपिंडसहितं युष्मदनुज्ञया सद्यः करिष्ये; कुरुष्व|

( सव्यं ) ( यवकुशानादाय )
पुरुरवार्द्रवनामभ्यो विश्वेभ्योदेवेभ्यइदमासनं स्वाहा; स्वासनमस्तु|
हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

( अपसव्यं ) ( तिलकुशानादाय ) ( पृथक्पृथक् एकतंत्रेण वा )
१, अमुकगोत्रस्य पितुः अमुकशर्मणः वसुरूपस्य इदमासनं स्वधा; स्वासनमस्तु|
हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

२, अमुकगोत्रस्य पितामहस्य अमुकशर्मणः रुद्ररूपस्य इदमासनं स्वधा; स्वासनमस्तु|
हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

३, अमुकगोत्रस्य प्रपितामहस्य अमुकशर्मणः आदित्यरूपस्य इदमासनं स्वधा; स्वासनमस्तु| हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यरूपेभ्यः इदमासनं स्वधा; स्वासनमस्तु| हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|



आवाहनम्|
( सव्यं ) (यवानादाय )
पुरुरवार्द्रवसंज्ञकान् विश्वान्देवानावाहयिष्ये; आवाहय|
ओम् विश्वेदेवास आगत श्रृणुतामइम ँ हवं| एदंबर्हिर्निषीदत|| ( जानुमुन्मुच्य )
विश्वेदेवाः श्रृणुतेम ँ हवम्मे येअंतरिक्षे यउपद्यविष्ढ|
ये अग्निजिह्वाउतवा यजत्रा आसद्यास्मिन् बर्हिषि मादयद्ध्वं||
औषधयः समवदंत सोमेनसहराज्ञा| यस्मै कृणोति ब्राह्मणस्त ँ राजन्पारयामसि||
( प्रदक्षिणं यवान्विकीर्य कृतांजलिः पठेत् )
आगच्छन्तु महाभागा विश्वेदेवा महाबला|ये चात्र विहिता श्राद्धेसावधानाभवन्तुते||भवाम||
( अपसव्यं ) ( तिलानादाय ) ( पृथक्पृथक् एकतंत्रेण वा )
१, अमुकगोत्रं पितरं अमुकशर्माणं वसुरूपं आवाहयिष्ये; आवाहय|
ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितृन्हविषे अत्तवे||
एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः|
दत्तास्मभ्यं द्रविणेहभद्र ँ रयिंचनः सर्ववीरं नियछत||
( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||
अपहता असुरा रक्षा ँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )

२, अमुकगोत्रं पितामहं अमुकशर्माणं रुद्ररूपं आवाहयिष्ये; आवाहय|
ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितृन्हविषे अत्तवे||
एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः|
दत्तास्मभ्यं द्रविणेहभद्र ँ रयिंचनः सर्ववीरं नियछत||
( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||

अपहता असुरा रक्षाँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )

280

३, अमुकगोत्रं प्रपितामहं अमुकशर्माणं आदित्यरूपं आवाहयिष्ये; आवाहय|
ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितृन्हविषे अत्तवे||
एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः|
दत्तास्मभ्यं द्रविणेहभद्रँ रयिंचनः सर्ववीरं नियछत||
( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||
अपहता असुरा रक्षाँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )

अमुकगोत्रान् पितृपितामहप्रपितामहान् अमुकामुकामुकशर्मणः वसुरुद्रादित्यस्वरूपान्
आवाहयिष्ये; आवाहय|
ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितृन्हविषे अत्तवे||
एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः|
दत्तास्मभ्यं द्रविणेहभद्रँ रयिंचनः सर्ववीरं नियछत||
( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||
अपहता असुरा रक्षाँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )
अर्घ्यपात्राणि पुरयेत्|

( सव्यं ) ( विश्वेषांदेवानांपागग्रंपात्रद्वयंमेकंवाप्रागग्रदर्भोपरिन्यसेत् )
( सकुशंजलमादाय )
१ २ ३ २३१ २ ३ १ २ ३१२ २उ ३१ २
ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||
( यवानादाय )
ओम् यवोसियवयास्मद्वेषो यवयारातीः||
इदमत्र| चंदनं पुष्पं|

( अपसव्यं )
( पितृणां दक्षिणाग्रदर्भोपरि दक्षिणाग्राणि त्रीणित्रीणि पवित्राणिस्तव्यानि )
( सकुशंजलमादाय )
१ २ ३ २३१ २ ३ १ २ ३१२ २उ ३१ २
ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||
( तिलानादाय )
ओम् तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः|
प्रत्नमद्भिः पृक्तः स्वधया पितृन्लोकान्प्रीणाहि नः स्वाहा||
इदमत्र| चंदनं पुष्पं|

( सव्यं )
अर्धपात्राणामर्चनविधेः सर्वं परिपूर्णमस्तु|

अर्घदानम्|
( सव्यं ) ( उदकोपस्पर्शः )
स्वाहार्घ्या भवन्तु; अस्तु स्वाहा|
विश्वेभ्योदेवेभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः शँ स्योनाः सुहवा भवन्तु||
पुरुरवार्द्रव नामानो विश्वेदेवा एतद्वोर्घ्यं स्वाहा|

( अपसव्यं ) ( पृथक्पृथक् एकतंत्रेण वा )
१, स्वधार्घ्या भवन्तु; अस्तु स्वधा|
पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः शँ स्योनाः सुहवा भवन्तु||

अमुकगोत्र पितः अमुकशर्मन् वसुरूप एतत्ते अर्घ्यं| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा||



२, स्वधार्घ्या भवन्तु; अस्तु स्वधा|
पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः श ँ स्योनाः सुहवा भवन्तु||
अमुकगोत्र पितामह अमुकशर्मन् रुद्ररूप एतत्ते अर्घ्यं| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा||

३, स्वधार्घ्या भवन्तु; अस्तु स्वधा|
पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः श ँ स्योनाः सुहवा भवन्तु||
अमुकगोत्र प्रपितामह अमुकशर्मन् आदित्यरूप एतत्ते अर्घ्यं| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा||
स्वधार्घ्या भवन्तु; अस्तु स्वधा|
पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः श ँ स्योनाः सुहवा भवन्तु||
अमुकगोत्राः पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माः वसुरुद्रादित्यस्वरूपाः एष वो अर्घः|
( ततः पात्रं न्युब्जंकरणांतं प्रकृतिवत्; )

गंधादिदानम्|
( सव्यं )
पुरुरवार्द्रवसंज्ञकेभ्योनामभ्योविश्वेभ्योदेवेभ्योनमः अत्र० अयं वोगंधः;सुगंधः०यवमाच्छादनं० इदं पुष्पं;सुपुष्पम्०इदंतुलसीदलं; सुतुलसीद्लं०इमेवाससी;सुवाससी०इदंउपवीत;सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०शेषोपचारार्थे यवकुशाःसुकुशाः|

यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं विश्वेभ्योदेवेभ्यः स्वाहा—इदं विश्वेभ्यो देवेभ्यो नमम|

283

( अपसव्यं ) ( पृथक्पृथक्एकतंत्रेणवा )
१, अमुकगोत्राय पित्रे अत्र० अयं वो गंधः; सुगंधः० तिलमाच्छादनं० इदं पुष्पं; सुपुष्पम्०
इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी० इदं उपवीतं; सूपवीतं०
अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०
शेषोपचारार्थे तिलकुशाः सुकुशाः|
यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं अमुकगोत्राय पित्रे अमुकशर्मणे वसुरूपाय स्वधा—इदं पित्रे नमम|

२, अमुकगोत्राय पितामहाय अत्र० अयं वो गंधः; सुगंधः० तिलमाच्छादनं०
इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी०
इदं उपवीतं; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०
शेषोपचारार्थे तिलकुशाः सुकुशाः|
यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं अमुकगोत्राय पितामहाय अमुकशर्मणे रुद्ररूपाय स्वधा—इदं
पितामहाय नमम|

३, अमुकगोत्राय प्रपितामहाय अत्र० अयं वो गंधः; सुगंधः० तिलमाच्छादनं०
इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी०
इदं उपवीतं; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०
शेषोपचारार्थे तिलकुशाः सुकुशाः|
यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं अमुकगोत्राय प्रपितामहाय अमुकशर्मणे आदित्यरूपाय स्वधा—इदं
प्रपितामहाय नमम|

अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अत्र० अयं वो गंधः; सुगंधः० तिलमाच्छादनं० इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी० इदं उपवीत; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः० शेषोपचारार्थे तिलकुशाः सुकुशाः|
यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यरूपेभ्यो यथा यथा विभागं वः स्वधा–इदं पितृपितामहप्रपितामहेभ्यो नमम|
अस्य श्राद्धस्यार्चनविधेः परिपूर्णं|

( सव्यं ) ( आचमनं )
अग्नौकरणम्|
( अत्रसाग्निकेनापिब्राह्मणपाणावग्नौकरण होम कर्त्तवय इति देव याज्ञिकाः; स्मृति वाक्यभिप्रायेणाहुः; करेहुतं लौकिकेग्नौ प्रक्षिप्य दग्धव्यं; हुतावशिष्टमन्येषां पितामहादीनां पात्रेषु प्रक्षेप्तव्यं )
–अधेत्यादि–––तिथौ ( अपसव्यं ) पाथेय श्राद्धनिमित्तं भवदनुज्ञया अप्सु(विप्रपाणाव्) अग्नौकरणं करिष्ये; कुरुष्व|
१, ओम् स्वाहाऽसोमाय पितृमते–इदं सोमाय पितृमते नमम|
२, ओम् स्वाहाऽग्नये कव्यवाहनाय–इदं अग्नये कव्यवाहनाय नमम|

( सव्यं )
ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे यवान् विकीर्य; न्युब्जाभ्यां दक्षिणोत्तरहस्ताभ्यां पात्रमालभ्य )
ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वाहा|
३२उ ३१ २ ३ १ २र ३२ १२ ३ २
ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले|| ( विष्णोः हव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )

इदं अन्नादि यद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं पुरुरवार्द्रवसंज्ञकेभ्योनामभ्यो विश्वेभ्यो देवेभ्यः स्वाहा–इदं विश्वेभ्यो देवेभ्यो नमम|

285

( अपसव्यं ) ( पृथक्पृथक्एकतंत्रेणवा )

१, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )

इदं अन्नादियद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्राय पित्रे अमुकशर्मणे वसुरूपाय स्वधा–इदं पित्रे नमम|

२, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )

इदं अन्नादि यद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्राय पितामहाय अमुकशर्मणे रुद्ररूपाय स्वधा–इदं पितामहाय नमम|

३, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )

यद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्राय प्रपितामहाय अमुकशर्मणे आदित्यरूपाय स्वधा–इदं प्रपितामहाय नमम|

ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवधाय )

इदं अन्नादियद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्रा पितृपितामहप्रपितामहा अमुकामुकामुकशर्माणः वसुरुद्रादित्यरूपा स्वधा–इदं पितृपितामहप्रपितामहेभ्यः नमम|

( सव्यं )

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतं; ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना|

हरिर्दाता हरिर्भोक्ता हरिरन्नं प्रजापतिः; हरिर्विप्रशरीरस्थो भुंक्ते भोजयते हरिः|

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च; हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु|

ओम् तत्सद् ब्रह्मार्पणमस्तु|

( अपसव्यं )

सकृत्सकृत्सर्वेभ्य आपो दत्वा|

( सव्यं )

देवानामापोशनं दत्वा|

( अपसव्यं )

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः; त्रींल्लोकान् व्याप्य भूतात्मा भुंक्ते विश्वभुगव्ययः|

अनेन चट(ब्राह्मण)भोजन समाराधनेन श्री पितृस्वरूपी जनार्दन वासुदेवः प्रीयतां नमम|

ईशान विष्णु कमलासन कार्त्तिकेय वह्निनत्रयार्क रजनीशगणेश्वराणां;

क्रौंचामरेन्द्र कलशोद्भव कश्यपानां पादान्नमामि सततं पितृमुक्तिहेतोः|

( सव्यं )

देवाः अमृतं कुरुत|

( अपसव्यं )

ओम् तत्सत्पितरः अमृतं जुषध्वं|

अपेक्षितं याचितव्यं त्याज्यं चैवाऽनपेक्षितं; उपविश्य सुखेनैव भोक्तव्यं स्वस्थमानसैः|
विद्यते शाकपाकानां रोचते यत्तु गृहयतां; अरूच्यं तत् परित्याज्यं संकोचं नैव कारयेत्|



( सव्यं ) ( गायत्रीं पठित्वा )
ओम् मधुवाता ऋतायते मधुक्षरंति सिंधवः; माधवीर्नः संत्वोषधीः|
मधुनक्तमु तोषसो मधुमत्पार्थिव ँ रजः; मधुद्यौरस्तुनः पिता|
मधुमान्नो वनस्पतिर्मधुमा ँ २ऽ अस्तु सूर्यः; माध्वीर्गावो भवन्तु नः|
मधु मधु मधु|
( तीर्थश्राद्धे गयाश्राद्धे श्राद्धे मातामहे तथा; विकिर नैव दातव्यं श्राद्धे षोडशिके तथा )

( अपसव्यं )
पितृभ्यः सकृत्सकृदपो दत्वा|

( सव्यं )
देवेभ्यः सकूत्सकृदपो दत्वा| ( पूर्ववद्गायत्रीं जप्त्वा )
ओम् मधुवाता ऋतायते मधुक्षरंति सिंधवः; माधवीर्नः संत्वोषधीः|
मधुनक्तमु तोषसो मधुमत्पार्थिव ँ रजः; मधुद्यौरस्तुनः पिता|
मधुमान्नो वनस्पतिर्मधुमा ँ २ऽ अस्तु सूर्यः; माध्वीर्गावो भवन्तु नः|
मधु मधु मधु| ( शेषमन्नं किं क्रियतां; इष्टैः सह भुज्यतां )

पिंडदानं|
( दक्षिणाग्रंसमूलंकुशमास्तीर्यतद्दक्षिणतःपंक्तिरूपेणकुशत्रयंपित्रादीनां पिंडदानार्थं दक्षिणग्रभेवसमास्तीर्य; अपहताति पिंजूल्यारेखां कृत्वा एतपितर इति नियछते त्यंतेन पितृनावाहयेत्; ततः पात्रे जलमादाय )
( अपसव्यं ) ( पृथक्पृथक्एकतंत्रेणवा )
१, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप अवनेनिक्ष्व| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप अवनेनिक्ष्व| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा|| ( उदकोपस्पर्शः )

३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप अवनेनिक्ष्व| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा|| ( उदकोपस्पर्शः )
अमुकगोत्रा पितृपितामहप्रपितामहा अमुकामुकामुकशर्मणो वसुरुद्रादित्यरूपाः अवनेनिक्ष्व|

288

१, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप पाथेयश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप पाथेयश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहाय नमम|| ( उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप पाथेयश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )
पिंडेषु प्रत्यवनेजनम्|
१, अमुकगोत्रः अस्मत्पितः अमुकशर्मन् वरूणरूप प्रत्यवनेजनं|
२, अमुकगोत्रः पितामह अमुकशर्मन् प्रजापतिरूप प्रत्यवनेजनं|
३, अमुकगोत्रः प्रपितामह अमुकशर्मन् वरूणरूप प्रत्यवनेजनं|
ओम् अत्रपितरो मादयद्ध्वँ यथाभाग मावृषायद्ध्वम्| ( अग्रदक्षिणावर्त्तनेन दक्षिणाभिमुखो भूत्वा श्वासं नियम्य पितृन् ध्यात्वा श्वासमविमुंचत्स्तथैव वर्त्तमानोजपेत्)
अमीमदन्त पितरो यथाभाग मावृषायिषत| ( अथांजलिकृतोजपति )
ओम् नमोवः पितरः पितरो नमो वोगृहान्नः पितरो दत्तसतो वः पितरो देष्मे|
एतद्वः पितरो वासः| ( इति सूत्रदानं )
( सव्यं )
पिंडानामर्चनम्|
संकल्पः– अस्मत्कुल अभिवृद्धयर्थं सव्येन पिण्डपूजां करिष्ये|
पिंडसंस्थाः पितरः अत्रं स्वधा० पिंडसंस्थाः पितरः वस्त्रं स्वधा०
पिंडसंस्थाः पितरः गन्धं स्वधा० पिंडसंस्थाः पितरः तिलाक्षताः स्वधा०
पिंडसंस्थाः पितरः इमानि भृङ्गराजसहितानि पुष्पाणि तुलसीदलानि च स्वधा०
पिंडसंस्थाः पितरः धूपं स्वधा० पिंडसंस्थाः पितरः दीपं स्वधा०
पिंडसंस्थाः पितरः नैवेद्यं स्वधा० पिंडसंस्थाः पितरः मुखवासार्थे पूगीफलं ताम्बूलं स्वधा० पिंडसंस्थाः पितरः यथाशक्ति रजतं तदभावे यत्किन्चिद्वयावहारिकं द्रव्यं स्वधा|
( अपसव्यं )
संकल्पः– एभिः कृतैः पिंडदानैः पितृपितामहप्रपितामहादि त्रयाणां अक्षय्या तृप्तिरस्तु|

काले श्राद्धं भवतु; भवतु|
गयाश्राद्धावाप्तिरस्तु|
गयायां पिंडदानेन यातृप्तिःसातृप्तिरस्तु|
स्वर्गेवासोऽस्तु|



अर्घदानम्|

पितरः पिंडरूपिणः; अयमर्घो मया दत्तः पुत्रपौत्रविवर्द्धये| ( नमस्कारः )
पितादेवः पिताचार्यः पिताधर्मः पितागुरुः; तुष्टे पितरि सन्तुष्टा देवानामपि देवताः|
पिंडानामर्चनविधेः परिपूर्णतास्तु; अस्तु|

( सव्यं ) ( आचमनं ) ( तूष्णींसुसंप्रोक्षितमित्यादि )
( शिवा आपः सन्तु० सौमनस्यमस्तु० अक्षतं चारिष्टं चास्तु० समाचाराद् दीर्घमायुः शान्तिःपुष्टिस्तुष्टिस्चास्तु ) ( पृथक्पृथक् एकतंत्रेण वा )

( अपसव्यं )
१, अमुकगोत्रस्य अस्मत्पितुः अमुकशर्मणो वस्वात्मनः दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )
२, अमुकगोत्रस्य पितामहस्य अमुकशर्मणो रुद्रात्मनः दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )
३, अमुकगोत्रस्य प्रपितामहस्य अमुकशर्मणो आदित्यात्मनः दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )

अमुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानां अमुकामुकामुकशर्माणां वसुरुद्रादित्य स्वरूपाणां दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )

( सव्यं )
अघोराः पितरः सन्तु–सन्त्वघोराः पितरः० गोत्रं नोऽभिवर्द्धतां– अभिवर्द्धतां वो गोत्रं|
( अपसव्यं )
( ततो न्युब्जपात्रस्योपरि स्थापितानि पवित्राणि पिंडेषु दत्तवा न्युब्जीकृतार्घपात्रमुत्तानं कुर्यात् )
( स्वधां वाचयिष्ये; वाच्यताम् ) ( पृथक्पृथक् एकतंत्रेण वा )
१, अमुकगोत्रेभ्यः पितृभ्यः अमुकशर्मभ्यो वस्वात्मभ्यः स्वधोच्यतां; अस्तु स्वधा|

२, अमुकगोत्रेभ्यः पितामहेभ्यः अमुकशर्मभ्यो रुद्रात्मभ्यः स्वधोच्यतां; अस्तु स्वधा|
३, अमुकगोत्रेभ्यः प्रपितामहेभ्यः अमुकशर्मभ्यो आदित्यात्मभ्यः स्वधोच्यतां; अस्तु स्वधा|
अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मेभ्यः वसुरुद्रादित्येभ्यः स्वधोच्यतां; अस्तु स्वधा|



( जलमादाय )

ओम् ऊर्जवहन्ती रमृतंघृतंपयः कीलालम्परिस्तुत ँ स्वधा स्थ तर्पयत मेपितृन्| ( अनेन पिंडोपरिधारां दद्यात् )

( सव्यं )

विश्वेदेवाः प्रीयतामिति ब्रुवे| ( इति जलदानं )

( अपसव्यं ) ( पिंडपात्राणां चालनं )

( सव्यं )

अस्य श्राद्धस्य कृत प्रतिष्ठा सिद्धयर्थं दास्यमानां दक्षिणां मुखवासं च विश्वेभ्यो देवेभ्यः स्वाहा–इदं विश्वेभ्यो देवेभ्यो नमम|

( अपसव्यं )

अस्य श्राद्धस्य कृत प्रतिष्ठा सिद्धयर्थं दास्यमानां दक्षिणां मुखवासं च अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मेभ्यः वसुरुद्रादित्येभ्यः यथायथा विभागं वः स्वधा|

( सव्यं )

दातारो नोऽभिवर्द्धन्तां– अभिवर्द्धन्तां वो दातारः०
वेदाः संततिरेव च–अभिवर्द्धतांवोवेदाः; अभिवर्द्धतां वः संतति०
श्रद्धा च नो मा व्यगमत्–मा व्यगमद् वः श्रद्धा० बहुदेयं च नोऽस्तु– अस्तुवो बहुदेयम्०
अन्नं च नोबहुभवेत्–भवतु वो बह्वन्नम्० अतिथींश्चलभेमहि–लभध्वं चातिथीन्०
याचितारश्चनः सन्तु–सन्तु वो याचितारः० मा च याचिष्म कंचन–मा याचध्वं कंचन०
एता एवाशिषः सन्तु–एताः सत्याशिषः सन्तु|

संकल्पः– अद्येत्यादि शुभपुण्यतिथौ ( अपसव्यं ) अमुकगोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यरूपाणां ममपितुः पाथेयश्राद्ध निमित्तस्यपार्वणविधिना विश्वेदेवा पूर्वकस्य अर्घपिंडसहितस्य यः कश्चित् मंत्रोक्तविधेर्यन्यूनमतिरिक्तं तत्सर्वं ब्राह्मणानां श्री विष्णोश्च प्रसादात् परिपूर्णम् अस्तु|
वेदशास्त्रोक्त पुण्यफलावाप्तिरस्तु|
यत्कृतंतत्सुकृतमस्तु|

( सव्यं )

स्वस्ति भवन्तो ब्रुवन्तु। ( इति वैश्वदेविकानां जलदानं )
( अपसव्यं )
ततः सर्वे स्वस्तितेस्तु इति ब्रुयुः। ( इति पैतृकानां जलदानं )



( सव्यं )
( पितादेवः पिताचार्यः पिताधर्मः पितागुरुः; तुष्टे पितरि सन्तुष्टा देवानामपि देवताः )
( अपसव्यं )
ओम् वाजे वाजे वत वाजिनोनो धनेषु विप्राऽअमृताऽरुतज्ञा;
अस्य मध्वः पिबत मादयध्वन्तृप्तायात पथिभिर्देवयानैः।
उत्तिष्ठन्तु पितरः।
( सव्यं )
विश्वेदेवैः सह।
( अपसव्यं )
ओम् आमावाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे;
आमागन्ताम्पितरा मातरा चामासोमोऽअमृतत्वेन गम्यात्। ( अनेन प्रदक्षिणां जलधारां दद्यात् ) ( पिंडस्वस्थाने वासः; पिंडस्थाने इदमत्र चंदनंपुष्पं; कुलेकुलदीपकवृद्धिरस्तु ) ( सव्यं ) ( आचमनं; स्वयमेव तिलकं कुर्यात् )

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च; प्रयच्छन्ति तथाराज्यं प्रीतानृणांपितामहाः।

स्वस्तितेऽस्तु।

<u>वामदेव्य जपः</u>।
<u>विनियोगः</u>– कयानश्चित्रेति महावामदेव ऋषिः गायत्रीच्छन्दः विश्वेदेवादेवताः न्यूनातिरिक्त्दोषपरिहारार्थे शान्त्यर्थे च् जपे विनियोगः।

३ र ४ २ ४र५ १ र २१र २ १ २ र २
ओम् काऽ५या। नश्चाऽ३इत्राऽ३आभुवात्। ऊ। तीसदावृधःस। खा। औऽ३होहाइ।
१ २ ३ र२ १ १ २
कयाऽ२३शचाइ। ष्ठयौहोऽ३। हुम्माऽर। वाऽ२र्तोऽ३५हाइ॥
३ र ४ २ ४र५ १ २र१ र २ १ २ र२
काऽ५स्त्वा। सत्योऽ३माऽ३दानाम्। मा। हिष्ठोमात्सादन्ध। सा। औऽ३होहाइ।
१ २ ३ र २ १ १ २

द्ढाऽ२३चिदा| रुजौहोऽ३| हुम्माऽर| वाऽ२सोऽ३५हाइ||
३ र ४ २ ४र ५ १ २र१ २र १ २ र २
आऽ५भी| षुणाऽ३ःसाऽ३खीनाम्| आ| विताजराइतॄ| णाम्| औऽ२३होहाइ|
१ २ ३ र २ १ १ २
शताऽ२३म्भवा| सियौहोऽ३| हुम्माऽर| ताऽ२योऽ३५हाइ||३||

292

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२
ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||
१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२
कस्त्वा सत्यो मदानां म ँ हिष्ठो मत्सदन्धसः| द्ढा चिदारुजे वसु||
३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२
अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||
३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२
ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|
३ २ ३ २ ३ १ २ ३ २ ३ २३ १२ ३ २ ३२३ १ २
स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|ओम् स्वस्तिनोबृहस्पतिर्दधातु||

यस्य स्मृत्या च नामोक्त्या तपःश्राद्धक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
कायेन वाचा मनसेन्द्रियैर्वाबुद्धयात्मना वा प्रकृतिस्वभावात्;
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि|
प्रमादात्कुर्वतां कर्म प्रच्यवेत्यद्धरेषुयत्; स्मरणा देवतद्विष्णोः संपूर्णस्यादितिश्रुतिः|
स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्योनजातुचित्; सर्वे विधि निषेधाः स्युरेतयोरेवकिंकराः||
–पाथेयश्राद्ध कृतस्य विधेः परिपूर्णमस्तु|

गोग्राससंक्ल्पः–सौरभेयः सर्वहिताः पवित्राः पुण्यराशयः|

प्रतिगृह्णंतु मे ग्रासं गावः त्रैलोक्य मातरः||–इदं गोभ्यो न मम||
( नीवीती )

श्वाग्राससंक्ल्पः– द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ|

ताभ्यां अन्नं प्रदास्यामि रक्षेतां पथि मां सदा||–इदं श्वभ्यां न मम||
( अपसव्यं )

वायसबलिसंक्ल्पः–यमोऽसि यमदूतोऽसि वायसोऽसि महामते|

अहोरात्रकृतं पापं बलिं भक्षतु वायसः||–इदं वायसेभ्यो न मम||

|| इति पाथेय श्राद्ध विधिः ||



|| मासिक श्राद्ध प्रयोगः ||

– || अथ ब्रह्मयज्ञ प्रयोगः ||

–भस्मधारणम्|

विनियोगः–तत्पुरुषायेति तत्पुरुषो गायत्री रुद्रः भस्मधारणे विनियोगः|

ओम् तत्पुरुषाय विद्महे महदेवाय धीमहि| तन्नो रुद्रः प्रचोदयात्||

*विनियोगः–त्र्यम्बकमिति वशिष्ठोऽनुष्टुप् रुद्रः भस्मधारणे विनियोगः|

ओम् त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्; ऊर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात्|

–शिखाबन्धनम्|

विनियोगः–गायत्र्या विश्वामित्रो गायत्री सविता शिखाबन्धने विनियोगः|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

–ओम्  भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

विनियोगः–गायत्र्या परमेष्ठि प्रजापतिः गायत्री सविता शिखाबन्धने विनियोगः|

२उ३क २र  १ २३ १ २2 ३ १२ ३१ २  २ ३ १ २ ३ १२

–ओम्  भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

१ र १ र र र २१र र २ १ १

–ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियोयोनःप्रचोऽ१२१२| हुम्| आऽर|

१ ११११

दायो| आऽ२३४५||

–द्विराचमनम्|

१, ओम् भूः स्वाहा–ऋग्वेदं प्रीणामि|० २, ओम् भुवः स्वाहा–यजुर्वेदं प्रीणामि|०

३, ओम् स्वः स्वाहा–सामवेदं प्रीणामि|० ओम् भूर्भुवःस्वर्नमः– अथर्ववेदेतिहासपुराणादीनि प्रीणामि इति हस्तप्रक्षालनम्| ( पुनराचमनम् )

१, ओम् केशवाय नमः स्वाहा|० २, ओम् नारायणाय नमः स्वाहा|०

३, ओम् माधवाय नमः स्वाहा|० ४, ओम् गोविन्दाय नमः इति हस्तप्रक्षालनम्|



–प्राणायामः|

विनियोगः–भूरादिनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा; गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगती; अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा; गायत्र्याविश्वामित्रोगायत्रीसविता; आपोज्योतिरितिप्रजापतिर्यजुर्ब्रह्माग्निवायुसूर्याः प्राणायामे विनियोगः|

–ओम् भूः ओम् भुवः ओम् स्वः ओम् महः ओम् जनः ओम् तपः ओम् सत्यम्| ओम् भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही धियो योनः प्रचोदयात्| ओम आपोज्योति रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्|

–पवित्रधारणम्|

विनियोगः–पवित्रन्ते इति तिसृणां पवित्रो जगती सोमः पवित्रधारणे विनियोगः|

३१ २ ३ १२ ३१ २र ३ १२ ३ १ २
–ओम् पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः|
१२ ३२उ ३ १ २ ३ २३ १ २र३ १ २र
अतप्ततनूर्न तदामो अश्नुते श्रृतास इद्वहन्तः सं तदाशत||

विनियोगः–पवित्रन्ते इति द्वयोरादित्यो जगती ब्रह्मणस्पतिः पवित्रधारणे विनियोगः|

२ १ २र१ २१ २ १ १ २ २ २
–ओम् पवित्रन्तेविततंब्रह्मणस्पतेऽ३| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाइ|
१ र२र १ २र १ १ १ २ २ २
प्रभुर्गात्राणिपरियेषिविश्वताऽ२३ः| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाइ|
१ २ र १ विर र २ १ १ २ २ २
अतप्ततनूर्न्नतदाऽ२मोअश्नुतेऽ३| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाइ|
१र२ १ २ १ विर १ १ २ २ २ ५र
श्रृतासइद्वहन्तःसन्तदाऽरशत| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाऽ३४| औहोवा|
२१र ररविर १र विर ३ १११
अर्कोदेवानाऽ२म्परमेवियोऽ२माऽ२३४५न्||

295

२ १ २र१ २१ २ १ २र१
–ओम् पवित्रन्तेविततंब्रह्मणस्पतेऽ३| हुवाइ| औहोवाऽर|
१ र२र १ २र १ १ २र१

प्रभुर्गात्राणिपरियेषिविश्वताऽ२३ः| हुवाइ| औहोवाऽर|
१ २ र १ विर र २ १ २र१
अतप्ततनूर्न्नतदाऽ२मोअश्नुतेऽ३| हुवाइ| औहोवाऽर|
१र२ १ २ १ विर १ २र १ ५रर
श्रृतासइद्वहन्तःसन्तदाऽ२शत| हुवाइ| औ| होऽ२| वाऽ२३४| औहोवा|
२१ २ र१र२ १र विर ३ १११
अर्कस्यदेवाःपरमेवियोऽ२माऽ२३४५न्||

संकल्पः—अद्यपूर्वोच्चरित———शुभपुण्यतिथौ० श्रीपरमेश्वर प्रीतये ब्रह्मयज्ञं अहं करिष्ये|
( हस्तौ गोकर्णाकृतिवज्जान्वोरुपरिविन्यस्य मस्तकादिन्यंगान्यकंपयंस्तन्मनस्कऋषिछंदो देवता ब्राह्मणान्संस्मृत्यदज्ञाने )
विनियोगः—ओम्कारस्य ब्रह्माऋषिः दैवीगायत्रीछंदः परमात्मादेवता; व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजाऋषयः गायत्र्युष्णिगनुष्टुप्छंदासि अग्निवायुसूर्योदेवताः; तत्सवितुर्विविश्वामित्रोगायत्रीसविता सामवेदस्यादित्यो जगत्यादित्यः; स्वाध्याये

विनियोगः|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२
—ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||
१ र १ र र र २१र र २ १ १
—ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियोयोनःप्रचोऽ१२१२| हुम्| आऽर|
१ ११११
दायो| आऽ२३४५||
१ ४ २रर १ १ १ र २र १
—ओऽ३म्| ओग्नाइ| आयाहिऽ३वोइतोयाऽरइ| तोयाऽरइ| गृणानोह| व्यदातोयाऽरइ|
१ १ २र१ १ ३ ५रर१ ३ ५
तोयाऽरइ| नाइहोतासाऽ२३| त्साऽ२इबाऽ२३४औहोवा| हीऽ२३४षी||

 ४ ५ ४र५र ४ १ र र र २

—अग्नआयाहिवी| तयाइ| गृणानोहव्यदाताऽ२३याइ|

१ र र २ १ २ १ ३ ५रर २ १ १११

निहोतासत्सिबर्हाऽ२३इषी| बर्हाऽ२इषाऽ२३४औहोवा| बर्हीऽ३षीऽ२३४५||

 ४ ५ ४र५र ४ ४ १ र र २ २ २ २ ३ ५ १ २

—अग्नआयाहि| वाऽ५इतयाइ| गृणानोहव्यदाऽ१ताऽ३ये| निहोताऽ२३४सा| त्साऽ२३इबाऽ३|

१ ५ ५

हाऽ२३४षोऽ६हाइ||

( इत्यारभ्य यथाशक्ति एकंसाम अर्धाध्यायमध्यायंवाप्रत्यहमधीयानो मंत्र ब्राह्मणंचसमाप्य पुनरेवमेवारभ्य समाप्येत्; यत्किंचिदध्ययनाभावे वामदेव्यं पठेत् )

३ र ४ २ ४र ५ १ र २१र २ १ २ र २

—ओम् काऽ५या| नश्चाऽ३इत्राऽ३आभुवात्| ऊ| तीसदावृधःस| खा| औऽ३होहाइ|

१ २ ३ र२ १ १ २

कयाऽ२३शचाइ| ष्ठयौहोऽ३| हुम्माऽर| वाऽ२र्तोऽ३५हाइ||

३ र ४ २ ४र५ १ २र१ र २१ २ र २ १ २

—ओम् काऽ५स्त्वा|सत्योऽ३माऽ३दानाम्|मा|हिष्ठोमात्सादन्ध|सा|औऽ३होहाइ|द्दढाऽ२३चिदा|

३ र २ १ १ २

रुजौहोऽ३| हुम्माऽर| वाऽ२सोऽ३५हाइ||

३ र ४ २ ४र ५ १ २र१ २र१ २ र २ १ २

—आऽ५भी|षुणाऽ३ःसाऽ३खीनाम्|आ|विताजराइतॄ|णाम्|औऽ२३होहाइ|शताऽ२३म्भवा|

३ र २ १ १ २

सियौहोऽ३| हुम्माऽर| ताऽ२योऽ३५हाइ||

१ २ ३१ २र ३ २ ३१ ३२ १ २ २ ३ १ २ ३२

–ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||

१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२

कस्त्वा सत्यो मदानां मॅं हिष्ठो मत्सदन्धसः| द्दढा चिदारुजे वसु||

३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२

अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||

३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२

–ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|

३ २ ३ २ ३ १ २ ३ २ ३ २३ १२

स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|

३ २ ३ २३ १ २

ओम् स्वस्ति नो बृहस्पतिर्दधातु||

२उ३क २र १ २३ १ २2 ३ १२ ३१ २ २ ३ १ २ ३ १२

–ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

–ओम् नमोब्रह्मणे नमोब्राह्मणेभ्यो नमआचार्येभ्यो नमऋषिभ्यो नमोदेवेभ्यो नमोवेदेभ्यो नमोवायवेचमृत्यवेचविष्णवेच नमोवैश्रवणायचोपजायच|| ( इति त्रिः पठेत् )

– अनेन ब्रह्मयज्ञाख्येन कर्मणा श्रीभगवान् परमेश्वरः प्रीयताम् नमम|

–ओम् तत्सद् ब्रह्मार्पणमस्तु|

–यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु;न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|

ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|

## || <u>इति ब्रह्मयज्ञ प्रयोगः</u> ||

298

## || <u>अथ तर्पण प्रयोगः</u> ||

– आचम्य प्राणानायम्य|

<u>संकल्पः</u>–अद्यपूर्वोच्चरित–––शुभपुण्यतिथौ० श्रीपरमेश्वर प्रीतयर्थं देवपितृमनुष्याणां तर्पणमहं करिष्ये|

<u>विनियोगः</u>–बृहत्सामनो भारद्वाजो बृहतीन्द्रः; रथंतरस्य वसिष्ठो बृहतीन्द्रेशानौ; उन्नयेत्यस्य आदित्योनुष्टुबात्मा जपे विनियोगः|

२रर र र २ र १र र २ ३ ५ १ २ ३र४र५
–ओम् औहोइत्वामिद्धिहवामहाऽ३ए| सातौवाजा| स्याकाराऽ२३४वाः| तुवाऽ३४| औहोवा|
२१ २ २ ३ ५ १र र २ ३र४र५ १ १
वृत्राइषुवाइ| द्रासाऽ३१त्| पतिन्नाऽ२३४राः| त्वांकाष्ठाऽ३४| औहोवा| सूऽरआर्वाऽ२३४|
५ ५ १
ताः| उहुवाऽ६हाउ| वा| हस्||

२ र र र १ २र र रर १ २
–ओम् आभित्वाशूरनोनुमोवा| आदुग्धाइवधेनवईशानमस्यजगतः| सुवाऽ२३ईशाम्|
१ र२ १ ४ १ र र ५ ५ १
आइशानमाऽ२३इन्द्राऽ३| तास्थूऽ२३४षा| ओवाऽ६| हाउवा| अस्||

१ २र १ २र १ र २१२ १२र १ २ र र१र २र १
–ओम् <u>उन्नयामि</u>|<u>होइ</u>|(३)<u>आदित्यंप्रांचंयन्तमुन्नयामि</u>|<u>होइ</u>|(३) <u>अहोरात्राण्यरित्राणि</u>|<u>होइ</u>|(३)
र २ १ र र र र २ १ र र रर २
द्यौर्नौर्हाउ|(३) तस्यामसावादित्यईयतेहाउ|(३) तस्मिन्वयमीयमानईयामहेहाउ|(३)
१रर २ १रर २ २ १रर२ १ २ र १रर२ १ २३ १११
ईयामहेहाउ|(२) ईयामहेऽ३| हाउवा| प्रियेधामँस्त्रियक्षरे|(२) प्रियेधामँ स्त्रियक्षरेऽ२३४५||

( ततः प्राङ्मुखः पातितदक्षिणजानुर्दक्षिणहस्ते कुशत्रयः शुक्लैस्तिलैः कुशाग्रैर्देवतीर्थेन देवान्जलाशयात्प्रादेशमात्र हस्तांजलिमुद्धृत्यतर्पयेत् )
–ओम् नमोब्रह्मणे नमोब्राह्मणेभ्यो नमआचार्येभ्यो नमऋषिभ्यो नमोदेवेभ्यो नमोवेदेभ्यो नमोवायवेचमृत्यवेचविष्णवेच नमोवैश्रवणायचोपजायच|| ( इति कृतांजलिः पठित्वा ब्रह्मादींस्तर्पयेत् )



–ओम् ब्रह्माणं तर्पयामि० ओम् रुद्रं तर्पयामि० ओम् विष्णुं तर्पयामि०
ओम् प्रजापतिं तर्पयामि० ओम् वेदांस्तर्पयामि० ओम् देवांस्तर्पयामि०
ओम् छंदा ँ सि तर्पयामि० ओम् ऋषीं तर्पयामि० ओम् पुराणाचार्यांस्तर्पयामि०
ओम् गंधर्वास्तर्पयामि० ओम् इतरांस्तर्पयामि० ओम् मासं तर्पयामि०
ओम् संवत्सरंसावय तर्पयामि० ओम् देवीस्तर्पयामि० ओम् अप्सरस तर्पयामि०
ओम् देवानुगांस्तर्पयामि० ओम् नागांस्तर्पयामि० ओम् सागरांस्तर्पयामि०
ओम् पर्वतांस्तर्पयामि० ओम् सरितस्तर्पयामि० ओम् दिव्यान्मनुष्यांस्तर्पयामि०
ओम् इतरान्मनुष्याणांस्तर्पयामि० ओम् यक्षांस्तर्पयामि० ओम् रक्षांसि तर्पयामि०
ओम् सुपर्णांस्तर्पयामि० ओम् पिशाचांस्तर्पयामि० ओम् पृथिवीं तर्पयामि०
ओम् ओषधीस्तर्पयामि० ओम् पशूंस्तर्पयामि० ओम् वनस्पतिंस्तर्पयामि०
ओम् भूतग्रामंचतुर्विधं तर्पयामि|

( अपसव्यं )

(दक्षिणाभिमुखः पातितवामजानुः कृष्णैस्तिलैर्द्विगुणदर्भैः पितृतिर्थगतैः पितृतीर्थेन तर्पयेत्)
( तिल लेवानो विधि–मातापिताना सांवत्सरिकना अने महालयश्राद्धना दिवसे पर्वणिना दिवसे अने तीर्थादिकमां तिल लेवा निषेध नथी; पण ते सिवाय रवी मंगळ अने शुक्रवारे तथा मघानक्षत्रे रात्रि पडवो, छठ, सातम, अगियारस अने तेरश ए तिथियोए पोताना जन्मदिवसे अने उदय तथा अस्त वखत, विवाह, जनोइ, चौल अने नांदीश्राद्धनी पछी अनुक्रमे एकवर्ष, छमास, त्रणमास अने एकमास एटला दिवस वर्जिने तीर्थे जमणा पोचा उपर तिल राखी डाबा हाथ वडे प्रति नामो लेता जइ अने घेर तर्पणना पात्रमां तिल नाखी तर्पण करवुं )

–ओम् यमं तर्पयामि० ओम् यमपुरुषां तर्पयामि० ओम् कव्यवाडनलं तर्पयामि०
ओम् सोमं तर्पयामि० ओम् अर्यम्णं तर्पयामि० ओम् अग्निष्वात्तांस्तर्पयामि०
ओम् सोमपितांस्तर्पयामि० ओम् बर्हिषदस्तर्पयामि|

( अथ स्वान्पितृन्प्रत्येकं त्रिभिस्त्रिभिरंजलिभिस्तर्पयेत् )

–अमुकगोत्रं पितरं अमुकशर्माणं तर्पयामि० अमुकगोत्रं पितामहं अमुकशर्माणं तर्पयामि०
अमुकगोत्रं प्रपितामहं अमुकशर्माणं तर्पयामि०अमुकगोत्रां मातरं अमुकीदेवीदां तर्पयामि०
अमुकगोत्रांपितामहीं अमुकीदेवीदांतर्पयामि०अमुकगोत्रां प्रपितामहींअमुकीदेवीदांतर्पयामि०
अमुकगोत्रांसापत्नमातरं अमुकीदेवीदांतर्पयामि०अमुकगोत्रं मातामहंअमुकशर्माणंतर्पयामि०
अमुकगोत्रंप्रमातामहंअमुकशर्माणं तर्पयामि०अमुकगोत्रंवृद्धप्रमातामहंअमुकशर्माणंतर्पयामि०
( एताः प्रत्येकं त्रिभिस्त्रिभिरंजलिभिः; मातामह्यादिकां स्तवेकैकांजलिना तर्पयेत् )

300

अमुकगोत्रांमातामहींअमुकीदेवीदां तर्पयामि० अमुकगोत्रांप्रमातामहींअमुकीदेवीदांतर्पयामि०
अमुकगोत्रांवृद्धप्रमातामहींअमुकीदेवीदां तर्पयामि० अमुकगोत्रांपत्नींअमुकीदेवीदांतर्पयामि०
अमुकगोत्रं तनयं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रां तनयां अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रं पितृव्यकं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं मातुलं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं भ्रातरं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रां पितृभगिनीं अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रां मातृभगिनीं अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रां भगिनीं अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रं श्वसुरं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं सद्गुरुं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं शिष्यं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं आपतं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
( स्मृत्युक्त तर्पणीयानांतु पुण्याति शयत्वाद्यथा संभवं तर्पणं कर्तव्यं )

–पितृव ॅ शामातृव ॅ शौयेचान्ये मत्त उदकमर्हंतितांस्तर्पयामि|

( कण्ठावलंबित )
( कुशमध्यैर्मनुष्यतीर्थेनोर् ऊद्ध्वजानुः प्रत्यड्मुखः प्रत्येकं द्विस्तर्पयेत् )
–ओम् सनकं तर्पयामि० ओम् सनंदनं तर्पयामि० ओम् सनातनं तर्पयामि०
ओम् कपिलं तर्पयामि० ओम् आसुरिं तर्पयामि० ओम् वोढुं तर्पयामि०

ओम् पंचशिखं तर्पयामि|

–येषां नपिता नभ्राता नपुत्रो नान्यगोत्रिणः; ते सर्वे तृप्तिमायांतु मयोत्सृष्टैः कुशैः सदा|

( इति मंत्रेण कुशांस्त्यक्त्वा सव्येनाचम्य; ततोपसव्येनैव दक्षिणाभिमुखस्तिष्ठन्नपसव्येन् स्थले स्नानवस्त्रैक देशं निष्पीडयेत्; इति गृहे निषिद्धं )

–ये चास्माकंकुले जाता अपुत्रा गोत्रिणो मृताः;ते गृह्णंतु मयादत्तं वस्त्र निष्पीडनोदकं|



( सव्यं ) ( आचमनं ) (सूर्यादिभ्यस्तत्तन्मंत्रेणार्घ्यं दद्यात् )

विनियोगः–बण्महानिति जमदग्निर्बृहस्पतिः सूर्यः अर्घप्रदाने विनियोगः|

२ ३ १ २ ३ १२ ३१ २

ओम् बण्महा ँ असि सूर्य बडादित्य महा ँअसि|

३१ २ ३ १ २३ १ २ ३ १ २ ३ १ २

महस्ते सतो महिमा पनिष्टम मह्ना देव महा ँ असि||–ओम् भूर्भुवः स्वः सूर्य एषतेर्घः|

विनियोगः– आप्यायस्वेति गौतमो गायत्री सोमः अर्घप्रदाने विनियोगः|

ओम् आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्| भवा वाजस्य संगथे||

–ओम् भूर्भुवः स्वः सोम एषतेर्घः|

विनियोगः– अग्निमूर्द्धेति विरुपो गायत्री भौमः अर्घप्रदाने विनियोगः|

३ २ ३ २ ३२ ३ १ २र ३ २ ३२ ३ १ २र

–ओम् अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्| अपा ँ रेता ँ सि जिन्वति||

–ओम् भूर्भुवः स्वः भौम एषतेर्घः|

विनियोगः– अग्नेविवस्वतेति प्रस्कण्वो बृहती बुधः अर्घप्रदाने विनियोगः|

२ ३ १ २ ३१२ ३ १ २र २ ३ १२ ३ २३ २ ३ १ २३१२

ओम् अग्नेविवस्वदुषसश्चित्र ँराधो अमर्त्य|आ दाशुषे जातवेदो वहात्वमद्यादेवा ँउषर्बुधः||

–ओम् भूर्भुवः स्वः बुध  एषतेर्घः|

विनियोगः–बृहस्पतेइति अप्रतिरथः त्रिष्टुप्बृहस्पतिः बृहस्पतिः अर्घप्रदाने विनियोगः|

१२ ३ १२ ३ १२ ३ १ २र ३ १२

–ओम् बृहस्पते परि दीया रथेन रक्षोहामित्रा ँ अपबाधमानः|

३ १ २र ३ २ ३ १ २र १ २ ३ १ २र

प्रभन्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्||

–ओम्भूर्भुवःस्वःबृहस्पतेएषतेर्घः|

302

विनियोगः–शुक्रंतेइति भरद्वाजः त्रिष्टुप् शुक्रः अर्घप्रदाने विनियोगः|

३ २ ३ १ २३ १ २ ३ १ २र ३ १२३ १ २

–ओम् शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि|

२ ३ २ ३ १ २र ३१ २ ३२ ३ १ २

विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु||

–ओम् भूर्भुवः स्वः शुक्र  एषतेर्घः|

विनियोगः–शन्नःसिन्धुद्विपो गायत्री शनिः अर्घप्रदाने विनियोगः|

१ २ ३ २३१ २ ३ १ २ ३१२ २उ ३१ २

ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||

–ओम्भूर्भुवःस्वःशनेएषतेर्घः|

विनियोगः–कयानश्चित्रेति वामदेवो गायत्री राहुः अर्घप्रदाने विनियोगः|

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२

ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||

—ओम् भूर्भुवः स्वः राहो एषतेर्घः|

विनियोगः—केतुंकृण्वन्निति मधुच्छन्दा गायत्री केतुः अर्घप्रदाने विनियोगः|

३ २ ३ १ २ ३२३ १२ ३१ २ २३१ २

ओम् केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे| समुषद्भिरजायथाः||

—ओम्भूर्भुवःस्वःकेतवएषतेर्घः|

— अनेन यथाशक्ति देवपितृमनुष्य तर्पणाख्येन कर्मणा श्रीभगवान् मम समस्त पितृ स्वरूपि जनार्दन वासुदेवः प्रीयताम् नमम|

—ओम् तत्सद् ब्रह्मार्पणमस्तु|

—ओम् श्री गयागदाधरस्तृप्यतु|

—यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु;न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|

ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|

|| इति तर्पण प्रयोगः ||



( सव्यं )

-तिथिर्विष्णुस्तथा वारो नक्षत्रं विष्णुरेव च; योगश्च करणं चैव सर्वं विष्णुमयं जगत्|

संकल्पः—ओम् विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्री ब्रह्मणो द्वितीये परार्धे अह्वो द्वितीये यामे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भारतवर्षे भरतखण्डे जम्बुद्वीपे आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे कन्याकुमारिकानाम्नि क्षेत्रे अमुकनद्याःतीरे शालिवाहनशके बौद्धावतारे अस्मिन् वर्तमाने अमुकनामकेसंवत्सरे अमुकायनगते मार्तण्डमण्डले अमुकऋतौ शुभकारिणि अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकदिवसनक्षत्रे अमुकराशिस्थितेचन्द्रे अमुकराशिस्थितेसूर्ये अमुकराशिस्थितेदेवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं गुणगणविशेषेण विशिष्टायां शुभपुण्यतिथौ पुरुरवार्द्रव

संज्ञकानां विश्वेषां देवानां ( अपसव्यम् ) अमुकगोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां पार्वण विधिना मम पितुः ऊनमासिकादारभ्य ऊनाब्दिकपर्यन्तं पन्चदश(षोडश)श्राद्धानि एकतन्त्रेणमहं करिष्ये|

( सव्यं )संकल्पः– अद्येत्यादि०–––शुभपुण्यतिथौ ( अपसव्यम् ) मम पितुः करिष्यमाण ऊनमासिकादारभ्य ऊनाब्दिकपर्यन्तं पन्चदश(षोडश)श्राद्धांगभूतं ( सव्यं ) श्री विष्णोः यथालाभोपचारैः पूजनं करिष्ये|

( ताम्रपात्रे शुद्धोदकमापूर्य तत्र गंधादिनिक्षिप्य गायत्र्यादिमंत्रैः स्तजलमभिमंत्र्यतेनजलेन पूजासामग्रींसंप्रोक्ष्य प्रार्थयेत्; विष्णुपूजोपहाराणां पवित्रतास्तु )

संकल्पः–पूजन अधिकारार्थं पुरुषसूक्तेन( नाममन्त्रेण ) देहन्यासान् करिष्ये|

( नाममंत्रेण देहन्यासान् )

ओम्– अंगुष्ठाभ्यां नमः० नमो–तर्जनीभ्यां नमः० भगवते–मध्यमाभ्यां नमः०

वासुदेवाय– अनामिकाभ्यां नमः० नमः–कनिष्ठिकाभ्यां नमः०

ओम्नमोभगवतेवासुदेवायनमः–करतलकरपृष्ठाभ्यां नमः|

ओम्–हृदयाय नमः० नमो–शिरसे स्वाहा० भगवते–शिखायै वषट्०

वासुदेवाय–कवचाय हुम्० नमः–नेत्रत्रयाय वौषट्०

ओम्नमोभगवतेवासुदेवायनमः– अस्त्राय फट्|

विनियोगः–ओम् इदं विष्णुरित्यादिनां षण्णां मेधातिथिः ऋषिः गायत्रीछन्दः विष्णुरिन्द्रश्च देवता; सहस्त्रशीर्षेति पन्चानां नारायणः ऋषिः अनुष्टुप्छन्दः पुरुषो देवता; सोमः पवतेति वशिष्ठः ऋषिः त्रिष्टुप्छन्दः विश्वेदेवा देवता; किमित्तेतित्रयाणां वशिष्ठः ऋषिः त्रिष्टुप्छन्दः विष्णुर्देवता; प्रथश्चेत्यस्य प्रथः ऋषिः त्रिष्टुप्छन्दः धाता सविता विष्णुर्वा देवता पुरुषसूक्तेन न्यासे ( पूजने च ) विनियोगः|



१, आवाहनम्|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्|समूठमस्य पाँसुले||(वामहस्ते–डाबाहाथे)

२, आसनम्|

१ २ ३१ २र ३ १ २ ३ १ २र २ ३१२ ३ १२

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः| अतोधर्माणिधारयन्||(दक्षिणहस्ते–जमणाहाथे)

३, पाद्यम्|

२ ३   १२        ३ १ २ ३ १२    ३२  १२ ३  २ ३ १ २
विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे| इन्द्रस्य युज्यःसखा|| (वामपादे–डाबापगे)

४, अर्घ्यम्|

१   २र  ३२ ३१    २र        ३ १२  ३ २३ २३१ २
तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्|| (दक्षिणपादे–जमणापगे)

५, आचमनीयम्|

१  २र     ३ १२     ३ २   ३  १ २    २ ३  १ २३२३२
तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते|विष्णोर्यत्परमंपदम्||(वामजानुनि–डाबाठींचणे)

६, स्नानम्|

१२  ३१  २      ३ २३ १ २    ३२ ३  २उ३   १ २
अतो देवा अवन्तु नोयतोविष्णुर्विचक्रमे|पृथिव्याअधिसानवि||(दक्षिणजानुनि–जमणाठींचणे)

७, वस्त्रम्|

३१ २   ३  १२        ३ २  ३१ २
सहस्त्रशीर्षाः पुरुषः सहस्त्राक्षः सहस्त्रपात्|
१र  २र ३ १ २ ३ १  २    ३      २
स भूमि ँ सर्वतो वृत्वा त्यतिष्ठद्दशा ँ गुलम्|| ( वामकट्याम्–डाबीकमरे )



८, उपवीतम्|

३ २ ३२उ ३  १२३  १ २  ३ १२ ३१ २
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः|
२ ३ २३क २र           ३२ ३ २

तथा विष्वङव्यक्रामदशनानशने अभि|| ( दक्षिणकट्याम्–जमणीकमरे )

९, गंधम्|

१२ ३२उ ३ २ ३२उ ३ १ २

पुरुष एवेद ँ सर्वं यद्भूतं यच्च भाव्यम्|

१ २ ३ १ २३ १२ ३ १२ ३ १२ ३ २

पादोऽस्य सर्वाभूतानि त्रिपादस्या मृतं दिवि|| ( नाभौ–नाभिए )

१०, पुष्पम्|

१ २ ३२र ३ १ २ ३ १२ ३ १२३ १ २र३१ २र ३ १२

तावानस्य महिमा ततो ज्याया ँ श्च पूरुषः|उतामृतत्वस्येशानोयदन्ने नातिरोहति||(हृदये)

११, धूपम्|

१ २ ३ १२ ३२ ३ २ ३ १२ २३ १ २र ३२उ ३ १२ ३२

ततो विराडजायत विराजो अधि पुरुषः| सजातो अत्यरिच्यतपश्चाद्भूमिमथो पुरः||(कंठे)

१२, दीपम्|

१ २ ३ १ २३ १ २३ २ ३ १ २ ३ १ २३ २

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः|

३ १ २र३१ २र ३१ २ ३ १ २र

जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः|| ( वामबाहौ–डाबाखभे )

१३, नैवेद्यम्|

१ २र ३२ ३ २ ३ १ २र३१ २ ३ १ २

किमित्ते विष्णो परिचक्षि नाम प्रयद्ववक्षे शिपिविष्टो अस्मि|

१ २र ३ १ २र ३२र१३ १२ ३ २ ३१ २

मावर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ|| ( दक्षिणबाहौ–जमणाखभे )

१४, दक्षिणा—तांबूलम्।

१  २र३ १  २     ३२ ३१  २     ३१ २   ३ २

प्रतत्ते अद्य शिपिविष्ट हव्यमर्यः श ँ सामि वयुनानि विद्वान्।

१  २      ३२३ १२ ३ १ २  ३ १  २र   ३  २

तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके।। ( मुखे )

१५, प्रदक्षिणाम्।

१२      ३ १   २र  ३  १ २        ३ २

वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्।

१  २     ३ २३  १ २   ३ १ २   ३ २  ३  १ २

वर्धंतु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः।। ( नेत्रयोः )

१६, नमस्कारः।

१२ ३  १ २ ३ १२ ३  १  २र     ३ १२  ३२

प्रथश्च यस्य सप्रथश्च नामानुष्टु भस्य हविषो हविर्यत्।

३ १  २र    ३२ ३  १ २     ३१  २र  ३  १२

धातुर्द्युतानात्सवितुश्च विष्णो रथंतर माजभारा वसिष्ठः।। ( मूर्ध्नि—मस्तके )

संकल्पः—श्री विष्णोः यथालाभोपचार—पूजनविधेः परिपूर्णतास्तु।

क्षणदानम्|
( सव्यं ) ( यवानादाय )
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः देवकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
दैवे क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
पुरुरवार्द्रवसंज्ञकाः विश्वेदेवाः एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र|
चंदनं पुष्पं|
( अपसव्यं ) ( तिलानादाय ) ( पृथक्पृथक् एकतंत्रेण वा )
१, अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
अमुकगोत्र पितः अमुकशर्मन् वसुरूप एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं|
इदमत्र| चंदनं पुष्पं|
२, अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
अमुकगोत्रस्य पितामह अमुकशर्मन् रुद्ररूप एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं|
एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|
३, अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं| पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|

अमुकगोत्र प्रपितामह अमुकशर्मन् आदित्यरूप एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|



अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुकामुकामुकशर्माणः वसुरुद्रादित्यरूपा एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|
( सव्यं ) आचमनं|
ओम् भूर्भुवः स्वः समाध्वं; ओम् समास्म्हे|
( अपसव्यं )
ओम् भूर्भुवः स्वः समाध्वं; ओम् समास्म्हे|
( सव्यं ) आचमनं| प्राणायामः|
गायत्रींगायत्रंचसामपठेत्|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२
ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||
१ र १ र र र २१र र २ १ १
ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियो योनः प्रचोऽ१२१२| हुम्| आऽर|
१ १११११
दायो| आ२३४५||
( अपसव्यं )
प्रसादं कृत्वा ऊनमासिकादारभ्य ऊनाब्दिकपर्यन्तं पन्वदश(षोडश) श्राद्धं कारयध्वं; कुरुष्व| ( कुशतिलप्रक्षेपेणदिग्बंधः )
अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्|
तथा बर्हिषदः पान्तु याम्यां ये पितरः स्थिताः|

प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः| ऊर्ध्वतस्त्वर्यमा रक्षेत् कव्यवालनलोप्यधः|
रक्षोभूतपिशाचेभ्यः तथैवासुरदोषतः| सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे|
तिलाश्च रक्षन्त्वसुरान् दर्भा रक्षन्तु राक्षसान्| पंक्तिर्वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः|

309

( सव्यं ) अस्तु|
श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरं| ताभ्यां चैव नमस्कारं ततः श्राद्धं प्रवर्तते|
सप्तव्याधादशार्णेषु मृगाः कालन्जरे गिरौ| चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे|
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणावेदपारगाः| प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ|
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च| नमः स्वाहायै स्वधायै नित्यमेव नमो नमः| (३)
गयायै नमः| गदाधराय नमः|
गयायां पितृरूपेण स्वयमेव जनार्दनः| तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्|
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपिवा|यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः|
( ततस्ताम्रपात्रे प्रणीतासंज्ञके शुद्धोदकमापूर्य यवतिलगंधादीन्निक्षिप्य कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं संजप्य प्रदक्षिणमालोडयन् )
विनियोगः—एतोन्विन्द्रेति तिसृणां तिरश्च्यनुष्टुबिन्द्रः; तद्विष्णोः परमं पदमिति मेधातिथिः नृचद्गायत्री श्राद्धपाकप्रोक्षणाय जलाभिमंत्रणे विनियोगः|

२३ २ ३ १ २ ३२ ३२३ १ २ ३२ ३ १ २३ १ २ ३२ ३१ २
ओम् एतोन्विन्द्र ँस्तवाम शुद्ध ँशुद्धेन साम्ना| शुद्धैरुक्थैर्वावृध्वास ँशुद्धैराशीर्वान्ममत्तु||
१ २ ३२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २ ३१ २र ३ १ २
इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरुतिभिः| शुद्धोरयिनिं धारय शुद्धो ममद्धि सोम्य||
१ २ ३ १ २र ३२ ३ १ २र ३ १ २३ २ ३१ २ ३ १ २र
इन्द्र शुद्धो हि नो रयि ँ शुद्धो रत्नानि दाशुषे|शुद्धोवृत्राणिजिघ्नसेशुद्धोवाज ँसिषासिसि||
१ २र ३ २ ३१ २र ३ १२ ३ २ ३२३१ २
तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्||
१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२ ३२

तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते| विष्णोर्यत्परमं पदम्||
१२ ३१ २ ३ २३ १ २ ३२ ३ २उ ३ १
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे| पृथिव्या अधिसानवि||

(एभिर्मंत्रैर्जलमभिमंत्र्य कुशाग्रगृहितजलेन अपसव्येन श्राद्धोपहारान्पाकांश्चप्रोक्षेत् )

310

( अपसव्यं )
क्षुद्रदृष्टिनिपतिताः पाकादिदोषाः पाकादिनां पवित्रतास्तु; अस्तु|

( सव्यं )
भवतांप्रसादात्श्राद्धोपहाराणां पाकादीनां पवित्रतास्तु; अस्तु|
देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु; अस्तु|

संकल्पः– अद्येत्यादि शुभपुण्यतिथौ ( अपसव्यं ) अमुकगोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां ऊनमासिकादारभ्य ऊनाब्दिकपर्यन्तं पन्चदश(षोडश) श्राद्धं विश्वेदेवा पूर्वकं अर्ध्यपिंडसहितं युष्मदनुज्ञया सद्यः करिष्ये; कुरुष्व|

( सव्यं ) ( यवकुशानादाय )
पुरुरवार्द्रवनामभ्यो विश्वेभ्योदेवेभ्यइदमासनं स्वाहा; स्वासनमस्तु|
प्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

( अपसव्यं ) ( तिलकुशानादाय ) ( पृथक्पृथक् एकतंत्रेण वा )
१, अमुकगोत्रस्य पितुः अमुकशर्मणः वसुरूपस्य इदमासनं स्वधा; स्वासनमस्तु|
हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|
२, अमुकगोत्रस्य पितामहस्य अमुकशर्मणः रुद्ररूपस्य इदमासनं स्वधा; स्वासनमस्तु|
हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

३, अमुकगोत्रस्य प्रपितामहस्य अमुकशर्मणः आदित्यरूपस्य इदमासनं स्वधा; स्वासनमस्तु| हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था  इमेकुशाः|

अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यरूपेभ्यः इदमासनं स्वधा; स्वासनमस्तु| हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था  इमेकुशाः|



आवाहनम्|

( सव्यं ) (यवानादाय )

पुरुरवार्द्रवसंज्ञकान् विश्वान्देवानावाहयिष्ये; आवाहय|

ओम् विश्वेदेवास आगत श्रृणुतामइम ँ हवं| एदंबर्हिर्निषीदत|| ( जानुमुन्मुच्य )

विश्वेदेवाः श्रृणुतेम ँ हवम्मे येअंतरिक्षे यउपद्यविष्ढ|

ये अग्निजिह्वाउतवा यजत्रा आसद्यास्मिन् बर्हिषि मादयद्ध्वं||

औषधयः समवदंत सोमेनसहराज्ञा| यस्मै कृणोति ब्राह्मणस्त ँ राजन्पारयामसि||

( प्रदक्षिणं यवान्विकीर्य कृतांजलिः पठेत् )

आगच्छन्तु महाभागा विश्वेदेवा महाबला|ये चात्र विहिता श्राद्धेसावधानाभवन्तुते||भवाम||

( अपसव्यं ) ( तिलानादाय )  ( पृथक्पृथक् एकतंत्रेण वा )

१, अमुकगोत्रं पितरं अमुकशर्माणं वसुरूपं आवाहयिष्ये; आवाहय|

ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितॄन्हविषे अत्तवे||

एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः|

दत्तास्मभ्यं द्रविणेहभद्र ँ रयिंचनः सर्ववीरं नियछत||

( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य  कृतांजलिः पठेत् )

ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|

अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||

अपहता असुरा रक्षा ँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )

२, अमुकगोत्रं पितामहं अमुकशर्माणं रुद्ररूपं आवाहयिष्ये; आवाहय|

ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितॄन्हविषे अत्तवे||

एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः|

दत्तास्मभ्यं द्रविणेहभद्र ँ रयिंचनः सर्ववीरं नियछत||
( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य  कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||
अपहता असुरा रक्षा ँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )

312

३, अमुकगोत्रं प्रपितामहं अमुकशर्माणं आदित्यरूपं आवाहयिष्ये; आवाहय|
ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितृन्हविषे अत्तवे||
एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः|
दत्तास्मभ्यं द्रविणेहभद्र ँ रयिंचनः सर्ववीरं नियछत||
( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य  कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||
अपहता असुरा रक्षा ँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )

अमुकगोत्रान् पितृपितामहप्रपितामहान् अमुकामुकामुकशर्मणः वसुरुद्रादित्यस्वरूपान्
आवाहयिष्ये; आवाहय|
ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितृन्हविषे अत्तवे||
एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः|
दत्तास्मभ्यं द्रविणेहभद्र ँ रयिंचनः सर्ववीरं नियछत||
( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य  कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||
अपहता असुरा रक्षा ँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )
अर्घ्यपात्राणि पुरयेत्|

( सव्यं ) ( विश्वेषांदेवानांपागग्रंपात्रद्वयंमेकंवाप्रागग्रदर्भोपरिन्यसेत् )
( सकुशंजलमादाय )

१ २ ३ २३१ २ ३ १ २ ३१२ २उ ३१ २
ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||
( यवानादाय )
ओम् यवोसियवयास्मद्वेषो यवयारातीः||
इदमत्र| चंदनं पुष्पं|



( अपसव्यं )
( पितृणां दक्षिणाग्रदर्भोपरि दक्षिणाग्राणि त्रीणित्रीणि पवित्राणिस्तव्यानि )
( सकुशंजलमादाय )
१ २ ३ २३१ २ ३ १ २ ३१२ २उ ३१ २
ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||
( तिलानादाय )
ओम् तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः|
प्रत्नमद्भिः पृक्तः स्वधया पितृन्लोकान्प्रीणाहि नः स्वाहा||
इदमत्र| चंदनं पुष्पं|

( सव्यं )
अर्धपात्राणामर्चनविधेः सर्वं परिपूर्णमस्तु|

अर्घदानम्|
( सव्यं ) ( उदकोपस्पर्शः )
स्वाहार्घ्या भवन्तु; अस्तु स्वाहा|
विश्वेभ्योदेवेभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः श ँ स्योनाः सुहवा भवन्तु||
पुरुरवार्द्रव नामानो विश्वेदेवा एतद्वोर्घ्यं स्वाहा|
( अपसव्यं ) ( पृथक्पृथक् एकतंत्रेण वा )
१, स्वधार्घ्या भवन्तु; अस्तु स्वधा|

पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः श ँ स्योनाः सुहवा भवन्तु||
अमुकगोत्र पितः अमुकशर्मन् वसुरूप एतत्ते अर्घ्यं| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा||



२, स्वधार्घ्या भवन्तु; अस्तु स्वधा|
पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः श ँ स्योनाः सुहवा भवन्तु||
अमुकगोत्र पितामह अमुकशर्मन् रुद्ररूप एतत्ते अर्घ्यं| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा||
३, स्वधार्घ्या भवन्तु; अस्तु स्वधा|
पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः श ँ स्योनाः सुहवा भवन्तु||
अमुकगोत्र प्रपितामह अमुकशर्मन् आदित्यरूप एतत्ते अर्घ्यं| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा||
स्वधार्घ्या भवन्तु; अस्तु स्वधा|
पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः श ँ स्योनाः सुहवा भवन्तु||
अमुकगोत्राः पितृपितामहप्रपितामहाः अमुकामुकामुकशर्माः वसुरुद्रादित्यस्वरूपाः एष वो अर्घः|
( ततः पात्रं न्युब्जंकरणांतं प्रकृतिवत्; )
गंधादिदानम्|
( सव्यं )

पुरुरवार्द्रवसंज्ञकेभ्योनामभ्योविश्वेभ्योदेवेभ्योनमः अत्र० अयं वोगंधः;सुगंधः०यवमाच्छादनं०
इदं पुष्पं;सुपुष्पम्०इदंतुलसीदलं; सुतुलसीद्लं०इमेवाससी;सुवाससी०इदंउपवीत;सूपवीतं०
अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०शेषोपचारार्थे यवकुशाःसुकुशाः|
यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं विश्वेभ्योदेवेभ्यः स्वाहा–इदं विश्वेभ्यो देवेभ्यो नमम|



( अपसव्यं ) ( पृथक्पृथक्एकतंत्रेणवा )
१, अमुकगोत्राय पित्रे अत्र० अयं वो गंधः; सुगंधः० तिलमाच्छादनं० इदं पुष्पं; सुपुष्पम्०
इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी० इदं उपवीत; सूपवीतं०
अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०
शेषोपचारार्थे तिलकुशाः सुकुशाः|
यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं अमुकगोत्राय पित्रे अमुकशर्मणे वसुरूपाय स्वधा–इदं पित्रे नमम|

२, अमुकगोत्राय पितामहाय अत्र० अयं वो गंधः; सुगंधः० तिलमाच्छादनं०
इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी०
इदं उपवीत; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०
शेषोपचारार्थे तिलकुशाः सुकुशाः|
यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं अमुकगोत्राय पितामहाय अमुकशर्मणे रुद्ररूपाय स्वधा–इदं
पितामहाय नमम|

३, अमुकगोत्राय प्रपितामहाय अत्र० अयं वो गंधः; सुगंधः० तिलमाच्छादनं०
इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी०
इदं उपवीत; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०
शेषोपचारार्थे तिलकुशाः सुकुशाः|

यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं अमुकगोत्राय प्रपितामहाय अमुकशर्मणे आदित्यरूपाय स्वधा–इदं प्रेतप्रपितामहाय नमम|

316

अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अत्र० अयं वो गंधः; सुगंधः० तिलमाच्छादनं० इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी०
इदं उपवीतं; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०
शेषोपचारार्थे तिलकुशाः सुकुशाः|
यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|
यथादत्तं गंधाद्यर्चनं अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यरूपेभ्यो यथा यथा विभागं वः स्वधा–इदं पितृपितामहप्रपितामहेभ्यो नमम|
अस्य श्राद्धस्यार्चनविधेः परिपूर्णं|
( सव्यं ) ( आचमनं )
अग्नौकरणम्|
( अत्रसाग्निकेनापिब्राह्मणपाणावग्नौकरण होम कर्त्तवय इति देव याज्ञिकाः; स्मृति वाक्यभिप्रायेणाहुः; करेहुतं लौकिकेग्नौ प्रक्षिप्य दग्धव्यं; हुतावशिष्टमन्येषां पितामहादीनां पात्रेषु प्रक्षेप्तव्यं )
( अपसव्यं )
अद्येत्यादि0 ऊनमासिकादि आरभ्य ऊनाब्दिकपर्यन्तं पंचदश(षोडश) श्राद्धनिमित्तं भवदनुज्ञया अप्सु(विप्रपाणाव्) अग्नौकरणं करिष्ये; कुरुष्व|
१, ओम् स्वाहाऽसोमाय पितृमते–इदं सोमाय पितृमते नमम|
२, ओम् स्वाहाऽग्नये कव्यवाहनाय–इदं अग्नये कव्यवाहनाय नमम|
( सव्यं )
ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे यवान् विकीर्य; न्युब्जाभ्यां दक्षिणोत्तरहस्ताभ्यां पात्रमालभ्य )
ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वाहा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २
ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले|| ( विष्णोः हव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )
इदं अन्नादि यद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं
पुरुरवार्द्रवसंज्ञकेभ्योनामभ्यो विश्वेभ्यो देवेभ्यः स्वाहा–इदं विश्वेभ्यो देवेभ्यो नमम|



( अपसव्यं ) ( पृथक्पृथक्एकतंत्रेणवा )
१, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )
ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|
३२उ ३१ २ ३ १ २र ३२ १२ ३ २
ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )
इदं अन्नादियद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्राय पित्रे अमुकशर्मणे वसुरूपाय स्वधा–इदं पित्रे नमम|

२, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )
ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|
३२उ ३१ २ ३ १ २र ३२ १२ ३ २
ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पाँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )
इदं अन्नादि यद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्राय पितामहाय अमुकशर्मणे रुद्ररूपाय स्वधा–इदं पितामहाय नमम|

३, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )
ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|
३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )
यद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्राय प्रपितामहाय अमुकशर्मणे आदित्यरूपाय स्वधा–इदं प्रपितामहाय नमम|

318

ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )
ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|
३२उ ३१ २ ३ १ २र ३२ १२ ३ २
ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )
इदं अन्नादियद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्रा पितृपितामहप्रपितामहा अमुकामुकामुकशर्माणः वसुरुद्रादित्यरूपा स्वधा–इदं पितृपितामहप्रपितामहेभ्यः नमम|

( सव्यं )
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतं; ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना|
हरिर्दाता हरिर्भोक्ता हरिरन्नं प्रजापतिः; हरिर्विप्रशरीरस्थो भुंक्ते भोजयते हरिः|
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च; हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु|
ओम् तत्सद् ब्रह्मार्पणमस्तु|

( अपसव्यं )
सकृत्सकृत्सर्वेभ्य आपो दत्वा|

( सव्यं )
देवानामापोशनं दत्वा|

( अपसव्यं )

एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः; त्रींल्लोकान् व्याप्य भूतात्मा भुंक्ते विश्वभुगव्ययः|
अनेन चट(ब्राह्मण)भोजन समाराधनेन श्री पितृस्वरूपी जनार्दन वासुदेवः प्रीयतां नमम|
ईशान विष्णु कमलासन कार्त्तिकेय वह्निनत्रयार्क रजनीशगणेश्वराणां;
क्रौंचामरेन्द्र कलशोद्भव कश्यपानां पादान्नमामि सततं पितृमुक्तिहेतोः|

319

( सव्यं )
देवाः अमृतं कुरुत|

( अपसव्यं )
ओम् तत्सत्पितरः अमृतं जुषध्वं|
अपेक्षितं याचितव्यं त्याज्यं चैवाऽनपेक्षितं; उपविश्य सुखेनैव भोक्तव्यं स्वस्थमानसैः|
विद्यते शाकपाकानां रोचते यत्तु गृहयतां; अरूच्यं तत् परित्याज्यं संकोचं नैव कारयेत्|

( सव्यं ) ( गायत्रीं पठित्वा )
ओम् मधुवाता ऋतायते मधुक्षरंति सिंधवः; माधवीर्नः संत्वोषधीः|
मधुनक्तमु तोषसो मधुमत्पार्थिव ँ रजः; मधुद्यौरस्तुनः पिता|
मधुमान्नो वनस्पतिर्मधुमा ँ २ऽ अस्तु सूर्यः; माध्वीर्गावो भवन्तु नः|
मधु मधु मधु|
( तीर्थश्राद्धे गयाश्राद्धे श्राद्धे मातामहे तथा; विकिर नैव दातव्यं श्राद्धे षोडशिके तथा )

( अपसव्यं )
पितृभ्यः सकृत्सकृदपो दत्वा|

( सव्यं )
देवेभ्यः सकृत्सकृदपो दत्वा| ( पूर्ववद्गायत्रीं जप्त्वा )
ओम् मधुवाता ऋतायते मधुक्षरंति सिंधवः; माधवीर्नः संत्वोषधीः|
मधुनक्तमु तोषसो मधुमत्पार्थिव ँ रजः; मधुद्यौरस्तुनः पिता|
मधुमान्नो वनस्पतिर्मधुमा ँ २ऽ अस्तु सूर्यः; माध्वीर्गावो भवन्तु नः|

मधु मधु मधु| ( शेषमन्नं किं क्रियतां; इष्टैः सह भुज्यतां )

320

पिंडदानं|

( दक्षिणाग्रंसमूलंकुशमास्तीर्यतद्दक्षिणतःपंक्तिरूपेणकुशत्रयंपित्रादीनां पिंडदानार्थं दक्षिणग्रभेवसमास्तीर्य; अपहताति पिंजूल्यारेखां कृत्वा एतपितर इति नियछते त्यंतेन पितृनावाहयेत्; ततः पात्रे जलमादाय )

( अपसव्यं ) ( पृथक्पृथक्एकतंत्रेणवा )

१, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप अवनेनिक्ष्व| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा|| ( उदकोपस्पर्शः )

२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप अवनेनिक्ष्व| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा|| ( उदकोपस्पर्शः )

३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप अवनेनिक्ष्व| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा|| ( उदकोपस्पर्शः )

अमुकगोत्रा पितृपितामहप्रपितामहा अमुकामुकामुकशर्मणो वसुरुद्रादित्यरूपाः अवनेनिक्ष्व|

(१) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप ऊनमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )

२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप ऊनमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहाय नमम|| ( उदकोपस्पर्शः )

३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप ऊनमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )

(२) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप द्वितीयमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )

२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप द्वितीयमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहायनमम||(उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप द्वितीयमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )

321

(३) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप त्रैपक्षिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप त्रैपक्षिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहाय नमम|| ( उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप त्रैपक्षिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )

(४) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप तृतीयमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप तृतीयमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहायनमम||(उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप तृतीयमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )

(५) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप चतुर्थमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप चतुर्थमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहाय नमम||(उदकोपस्पर्शः)
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप चतुर्थमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )
(६) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप पंचममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )

२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप पंचममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहाय नमम|| ( उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप पंचममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )



(७) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप षाण्मासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप षाण्मासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहाय नमम|| ( उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप षाण्मासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )

(८) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप ऊनषाण्मासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप ऊनषाण्मासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहायनमम||(उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप ऊनषाण्मासिकश्राद्धनिमित्तं एष ते पिंडो|येचात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| (उदकोपस्पर्शः)

(९) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप सप्तममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप सप्तममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहायनमम||( उदकोपस्पर्शः)
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप सप्तममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )
(१०) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप अष्टममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )

२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप अष्टममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहायनमम||(उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप अष्टममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )



(११) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप नवममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप नवममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहाय नमम|| ( उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप नवममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )

(१२) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप दशममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप दशममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहाय नमम|| ( उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप दशममासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )

(१३) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप एकादशमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप एकादशमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहायनमम||(उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप एकादशमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदंप्रपितामहायनमम||(उदकोपस्पर्शः )

(१४) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप द्वादशमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप द्वादशमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहायनमम||(उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप द्वादशमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )



(१५) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप ऊनाब्दिकमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप ऊनाब्दिकमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहायनमम||(उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप ऊनाब्दिकमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहायनमम||(उदकोपस्पर्शः)

(१६) १, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप अधिकमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप अधिकमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहायनमम||(उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप अधिकमासिकश्राद्धनिमित्तं एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )

<u>पिंडेषु प्रत्यवनेजनम्</u>|

१, अमुकगोत्रः अस्मत्पितः अमुकशर्मन् वरूणरूप प्रत्यवनेजनं|

२, अमुकगोत्रः पितामह अमुकशर्मन् प्रजापतिरूप प्रत्यवनेजनं|

३, अमुकगोत्रः प्रपितामह अमुकशर्मन् वरूणरूप प्रत्यवनेजनं|

ओम् अत्रपितरो मादयद्ध्व ँ यथाभाग मावृषायद्ध्वम्| ( अग्रदक्षिणावर्त्तनेन दक्षिणाभिमुखो भूत्वा श्वासं नियम्य पितृन् ध्यात्वा श्वासमविमुंचत्स्तथैव वर्त्तमानोजपेत्)
अमीमदन्त पितरो यथाभाग मावृषायिषत| ( अथांजलिकृतोजपति )
ओम् नमोवः पितरः पितरो नमो वोगृहान्नः पितरो दत्तसतो वः पितरो देष्मे|
एतद्वः पितरो वासः| ( इति सूत्रदानं )



( सव्यं )

पिंडानामर्चनम्|

संकल्पः– अस्मत्कुल अभिवृद्धयर्थं सव्येन पिण्डपूजां करिष्ये|
पिंडसंस्थाः पितरः अत्रं स्वधा० पिंडसंस्थाः पितरः वस्त्रं स्वधा०
पिंडसंस्थाः पितरः गन्धं स्वधा० पिंडसंस्थाः पितरः तिलाक्षताः स्वधा०
पिंडसंस्थाः पितरः इमानि भृङ्गराजसहितानि पुष्पाणि तुलसीदलानि च स्वधा०
पिंडसंस्थाः पितरः धूपं स्वधा० पिंडसंस्थाः पितरः दीपं स्वधा०
पिंडसंस्थाः पितरः नैवेद्यं स्वधा० पिंडसंस्थाः पितरः मुखवासार्थे पूगीफलं ताम्बूलं स्वधा० पिंडसंस्थाः पितरः यथाशक्ति रजतं तदभावे यत्किन्चिद्वयावहारिकं द्रव्यं स्वधा|

( अपसव्यं )

संकल्पः– एभिः कृतैः पिंडदानैः पितृपितामहप्रपितामहादि त्रयाणां अक्षय्या तृप्तिरस्तु|
काले श्राद्धं भवतु; भवतु|
गयाश्राद्धावाप्तिरस्तु|
गयायां पिंडदानेन यातृप्तिःसातृप्तिरस्तु|
स्वर्गेवासोऽस्तु|

अर्घदानम्|

पितरः पिंडरूपिणः; अयमर्घो मया दत्तः पुत्रपौत्रविवर्द्धये| ( नमस्कारः )
पितादेवः पिताचार्यः पिताधर्मः पितागुरुः; तुष्टे पितरि सन्तुष्टा देवानामपि देवताः|

पिंडानामर्चनविधेः परिपूर्णतास्तु; अस्तु|

( सव्यं ) ( आचमनं ) ( तूष्णींसुसंप्रोक्षितमित्यादि )
( शिवा आपः सन्तु० सौमनस्यमस्तु० अक्षतं चारिष्टं चास्तु० समाचाराद् दीर्घमायुः शान्तिःपुष्टिस्तुष्टिस्चास्तु ) ( पृथक्पृथक् एकतंत्रेण वा )
( अपसव्यं )
१, अमुकगोत्रस्य अस्मत्पितुः अमुकशर्मणो वस्वात्मनः दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )



२, अमुकगोत्रस्य पितामहस्य अमुकशर्मणो रुद्रात्मनः दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )

३, अमुकगोत्रस्य प्रपितामहस्य अमुकशर्मणो आदित्यात्मनः दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )

अमुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानां अमुकामुकामुकशर्माणां वसुरुद्रादित्य स्वरूपाणां दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )

( सव्यं )
अघोराः पितरः सन्तु–सन्त्वघोराः पितरः० गोत्रं नोऽभिवर्द्धतां– अभिवर्द्धतां वो गोत्रं|

( अपसव्यं )
( ततो न्युब्जपात्रस्योपरि स्थापितानि पवित्राणि पिंडेषु दत्तवा न्युब्जीकृतार्घपात्रमुत्तानं कुर्यात् )
( स्वधां वाचयिष्ये; वाच्यताम् ) ( पृथक्पृथक् एकतंत्रेण वा )
१, अमुकगोत्रेभ्यः पितृभ्यः अमुकशर्मभ्यो वस्वात्मभ्यः स्वधोच्यतां; अस्तु स्वधा|

२, अमुकगोत्रेभ्यः पितामहेभ्यः अमुकशर्मभ्यो रुद्रात्मभ्यः स्वधोच्यतां; अस्तु स्वधा|

३, अमुकगोत्रेभ्यः प्रपितामहेभ्यः अमुकशर्मभ्यो आदित्यात्मभ्यः स्वधोच्यतां; अस्तु स्वधा|

अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मेभ्यः वसुरुद्रादित्येभ्यः स्वधोच्यतां; अस्तु स्वधा|

( जलमादाय )
ओम् ऊर्जंवहन्ती रमृतंघृतंपयः कीलालम्परिस्तुत ँ स्वधा स्थ तर्पयत मेपितृन्| ( अनेन पिंडोपरिधारां दद्यात् )



( सव्यं )
विश्वेदेवाः प्रीयतामिति ब्रुवे| ( इति जलदानं )
( अपसव्यं ) ( पिंडपात्राणां चालनं )

( सव्यं )
अस्य श्राद्धस्य कृत प्रतिष्ठा सिद्धयर्थं दास्यमानां दक्षिणां मुखवासं च विश्वेभ्यो देवेभ्यः स्वाहा–इदं विश्वेभ्यो देवेभ्यो नमम|

( अपसव्यं )
अस्य श्राद्धस्य कृत प्रतिष्ठा सिद्धयर्थं दास्यमानां दक्षिणां मुखवासं च अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अमुकामुकामुकशर्मेभ्यः वसुरुद्रादित्येभ्यः यथायथा विभागं वः स्वधा|

( सव्यं )
दातारो नोऽभिवर्द्धन्तां– अभिवर्द्धन्तां वो दातारः०
वेदाः संततिरेव च–अभिवर्द्धतांवोवेदाः; अभिवर्द्धतां वः संतति०
श्रद्धा च नो मा व्यगमत्–मा व्यगमद् वः श्रद्धा० बहुदेयं च नोऽस्तु– अस्तुवो बहुदेयम्०
अन्नं च नोबहुभवेत्–भवतु वो बह्वन्नम्० अतिथींश्चलभेमहि–लभध्वं चातिथीन्०
याचितारश्चनः सन्तु–सन्तु वो याचितारः० मा च याचिष्म कंचन–मा याचध्वं कंचन०
एता एवाशिषः सन्तु–एताः सत्याशिषः सन्तु|

संकल्पः– अद्येत्यादि शुभपुण्यतिथौ ( अपसव्यं ) अमुकगोत्राणां पितृपितामहप्रपितामहानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यरूपाणां मम पितुः ऊनमासिकादिराभ्य ऊनाब्दिकपर्यन्तानां पंचदश(षोडश)श्राद्धानां निमित्तस्य पार्वणविधिना विश्वेदेवा पूर्वकस्य अर्घपिंडसहितस्य यः कश्चित् मंत्रोक्तविधेर्यन्यूनमतिरिक्तं तत्सर्वं ब्राह्मणानां श्री विष्णोश्च प्रसादात् परिपूर्णम् अस्तु।
वेदशास्त्रोक्त पुण्यफलावाप्तिरस्तु।
यत्कृतंतत्सुकृतमस्तु।



( सव्यं )
स्वस्ति भवन्तो ब्रुवन्तु। ( इति वैश्वदेविकानां जलदानं )
( अपसव्यं ) ततः सर्वे स्वस्तितेस्तु इति ब्रुयुः। ( इति पैतृकानां जलदानं )
( सव्यं )
( पितादेवः पिताचार्यः पिताधर्मः पितागुरुः; तुष्टे पितरि सन्तुष्टा देवानामपि देवताः )
( अपसव्यं )
ओम् वाजे वाजे वत वाजिनोनो धनेषु विप्राऽअमृताऽरुतज्ञा;
अस्य मध्वः पिबत मादयध्वन्तृप्तायात पथिभिर्देवयानैः।
उत्तिष्ठन्तु पितरः।
( सव्यं ) विश्वेदेवैः सह।
( अपसव्यं )
ओम् आमावाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे;
आमागन्ताम्पितरा मातरा चामासोमोऽअमृतत्वेन गम्यात्। ( अनेन प्रदक्षिणां जलधारां दद्यात् ) ( पिंडस्वस्थाने वासः; पिंडस्थाने इदमत्र चंदनंपुष्पं; कुलेकुलदीपकवृद्धिरस्तु ) ( सव्यं ) ( आचमनं; स्वयमेव तिलकं कुर्यात् )

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च; प्रयच्छन्ति तथाराज्यं प्रीतानृणांपितामहाः।

स्वस्तितेऽस्तु।

वामदेव्य जपः।

विनियोगः— कयानश्चित्रेति महावामदेव ऋषिः गायत्रीच्छन्दः विश्वेदेवादेवताः न्यूनातिरिक्तदोषपरिहारार्थे शान्त्यर्थे च् जपे विनियोगः|

३ र ४ २ ४र५ १ र २१र २ १ २ र २
ओम् काऽ५या| नश्चाऽ३इत्राऽ३आभुवात्| ऊ| तीसदावृधःस| खा| औऽ३होहाइ|
१ २ ३ र२ १ १ २
कयाऽ२३शचाइ| ष्ठयौहोऽ३| हुम्माऽर| वाऽ२र्तोऽ३५हाइ||
३ र ४ २ ४र५ १ २र१ र २ १ २ र२
काऽ५स्त्वा| सत्योऽ३माऽ३दानाम्| मा| हिष्ठोमात्सादन्ध| सा| औऽ३होहाइ|
१ २ ३ र २ १ १ २
दृढाऽ२३चिदा| रुजौहोऽ३| हुम्माऽर| वाऽ२सोऽ३५हाइ||

329

३ र ४ २ ४र ५ १ २र१ २र १ २ र २
आऽ५भी| षुणाऽ३ःसाऽ३खीनाम्| आ| विताजराइतॄ| णाम्| औऽ२३होहाइ|
१ २ ३ र २ १ १ २
शताऽ२३म्भवा| सियौहोऽ३| हुम्माऽर| ताऽ२योऽ३५हाइ||३||
१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२
ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||
१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२
कस्त्वा सत्यो मदानां मँ हिष्ठो मत्सदन्धसः| दृढा चिदारुजे वसु||
३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२
अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||
३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२

ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|

३ २ ३ २ ३ १ २ ३ २ ३ २३ १२ ३ २ ३२३ १ २

स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|ओम् स्वस्तिनोबृहस्पतिर्दधातु||

यस्य स्मृत्या च नामोक्त्या तपःश्राद्धक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
कायेन वाचा मनसेन्द्रियैर्वाबुद्धयात्मना वा प्रकृतिस्वभावात्;
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि|
प्रमादात्कुर्वतां कर्म प्रच्यवेत्यद्धरेषुयत्; स्मरणा देवतद्विष्णोः संपूर्णस्यादितिश्रुतिः|
स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्योनजातुचित्; सर्वे विधि निषेधाः स्युरेतयोरेवकिंकराः||
–मासिकश्राद्ध कृतस्य विधेः परिपूर्णमस्तु|

गोग्राससंक्ल्पः–सौरभेयः सर्वहिताः पवित्राः पुण्यराशयः|

प्रतिगृह्णंतु मे ग्रासं गावः त्रैलोक्य मातरः||–इदं गोभ्यो न मम||

( नीवीती )श्वाग्राससंक्ल्पः– द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ|

ताभ्यां अन्नं प्रदास्यामि रक्षेतां पथि मां सदा||–इदं श्वभ्यां न मम||

( अपसव्यं ) वायसबलिसंक्ल्पः–यमोऽसि यमदूतोऽसि वायसोऽसि महामते|

अहोरात्रकृतं पापं बलिं भक्षतु वायसः||–इदं वायसेभ्यो न मम||

|| इति मासिक श्राद्ध विधिः ||



|| अथ महालय श्राध्ध प्रयोगः ||

–|| अथ ब्रह्मयज्ञ प्रयोगः ||

–भस्मधारणम्|

विनियोगः–तत्पुरुषायेति तत्पुरुषो गायत्री रुद्रः भस्मधारणे विनियोगः|

ओम् तत्पुरुषाय विद्महे महदेवाय धीमहि| तन्नो रुद्रः प्रचोदयात्||

*विनियोगः–त्र्यम्बकमिति वशिष्ठोऽनुष्टुप् रुद्रः भस्मधारणे विनियोगः|

ओम् त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्; ऊर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात्|

–शिखाबन्धनम्|

विनियोगः–गायत्र्या विश्वामित्रो गायत्री सविता शिखाबन्धने विनियोगः|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

–ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

विनियोगः–गायत्र्या परमेष्ठि प्रजापतिः गायत्री सविता शिखाबन्धने विनियोगः|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

–ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

१ र १ र र र २१र र २ १ १

–ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियोयोनःप्रचोऽ१२१२| हुम्| आऽर|

१ १११

दायो| आऽ२३४५||

–द्विराचमनम्|

१, ओम् भूः स्वाहा–ऋग्वेदं प्रीणामि|० २, ओम् भुवः स्वाहा–यजुर्वेदं प्रीणामि|०

३, ओम् स्वः स्वाहा–सामवेदं प्रीणामि|० ओम् भूर्भुवःस्वर्नमः– अथर्ववेदेतिहासपुराणादीनि प्रीणामि इति हस्तप्रक्षालनम्| ( पुनराचमनम् )

१, ओम् केशवाय नमः स्वाहा|० २, ओम् नारायणाय नमः स्वाहा|०

३, ओम् माधवाय नमः स्वाहा|० ४, ओम् गोविन्दाय नमः इति हस्तप्रक्षालनम्|



–प्राणायामः|

विनियोगः–भूरादिनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा; गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगती; अग्निवायुसूर्यबृहस्पतिवरुणेन्द्रविश्वेदेवा;

गायत्र्याविश्वामित्रोगायत्रीसविता; आपोज्योतिरितिप्रजापतिर्यजुर्ब्रह्माग्निवायुसूर्याः प्राणायामे विनियोगः|

—ओम् भूः ओम् भुवः ओम् स्वः ओम् महः ओम् जनः ओम् तपः ओम् सत्यम्| ओम् भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही धियो योनः प्रचोदयात्| ओम आपोज्योति रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्|

—पवित्रधारणम्|

विनियोगः—पवित्रन्ते इति तिसृणां पवित्रो जगती सोमः पवित्रधारणे विनियोगः|

३१ २ ३ १२ ३१ २र ३ १२ ३ १ २

—ओम् पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः|

१२ ३२उ ३ १ २ ३ २३ १ २र३ १ २र

अतप्ततनूर्न तदामो अश्नुते श्रृतास इद्वहन्तः सं तदाशत||

विनियोगः—पवित्रन्ते इति द्वयोरादित्यो जगती ब्रह्मणस्पतिः पवित्रधारणे विनियोगः|

२ १ २र१ २१ २ १ १ २ २ २

—ओम् पवित्रन्तेविततंब्रह्मणस्पतेऽ३| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाइ|

१ र२र १ २र १ १ १ २ २ २

प्रभुर्गात्राणिपरियेषिविश्वताऽ२३ः| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाइ|

१ २ र १ विर र २ १ १ २ २ २

अतप्ततनूर्न्तदाऽ२मोअश्नुतेऽ३| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाइ|

१र२ १ २ १ विर १ १ २ २ २ ५रर

श्रृतासइद्वहन्तःसन्तदाऽरशत| हुवेऽ२३|(२) होवाऽ३हाऽ३| हाऽ३४| औहोवा|

२१र रविर १र विर ३ १११

अर्कोदेवानाऽ२म्परमेवियोऽ२माऽ२३४५न्||

२ १ २र१ २१ २ १ २र१

–ओम् पवित्रन्तेविततंब्रह्मणस्पतेऽ३| हुवाइ| औहोवाऽर|

१ र२र १ २र १ १ २र१

प्रभुर्गात्राणिपरियेषिविश्वताऽ२३:| हुवाइ| औहोवाऽर|

१ २ र १ विर र २ १ २र१

अतप्ततनूर्न्नतदाऽ२मोअश्नुतेऽ३| हुवाइ| औहोवाऽर|

१र२ १ २ १ विर १ २र १ ५रर

श्रृतासइद्वहन्तःसन्तदाऽ२शत| हुवाइ| औ| होऽ२| वाऽ२३४| औहोवा|

२१ २ र१र२ १र विर ३ १११

अर्कस्यदेवाःपरमेवियोऽ२माऽ२३४५न्||

संकल्पः–अद्यपूर्वोच्चरित–––शुभपुण्यतिथौ० श्रीपरमेश्वर प्रीतये ब्रह्मयज्ञं अहं करिष्ये| ( हस्तौ गोकर्णाकृतिवज्जान्वोरुपरिविन्यस्य मस्तकादिन्यंगान्यकंपयंस्तन्मनस्कऋषिछंदो देवता ब्राह्मणान्संस्मृत्यदज्ञाने )

विनियोगः–ओम्कारस्य ब्रह्माऋषिः दैवीगायत्रीछंदः परमात्मादेवता; व्याहृतीनां विश्वामित्रजमदग्निभरद्वाजाऋषयः गायत्र्युष्णिगनुष्टुप्छंदासि अग्निवायुसूर्योदेवताः; तत्सवितुर्विविश्वामित्रोगायत्रीसविता सामवेदस्यादित्यो जगत्यादित्यः; स्वाध्याये

विनियोगः|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

–ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

१ र १ र र र २१र र २ १ १

–ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियोयोनःप्रचोऽ१२१२| हुम्| आऽर|

१ ११११

दायो| आऽ२३४५||

१ ४ २रर १ १ १ र २र १

–ओऽ३म्| ओग्नाइ| आयाहिऽ३वोइतोयाऽरइ| तोयाऽरइ| गृणानोह| व्यदातोयाऽरइ|

१ १ २र१ १ ३ ५रर१ ३ ५

तोयाऽरइ| नाइहोतासाऽ२३| त्साऽ२इबाऽ२३४औहोवा| हीऽ२३४षी||

333

४ ५ ४र५र ४ १ र र र २

–अग्नआयाहिवी| तयाइ| गृणानोहव्यदाताऽ२३याइ|

१ र र २ १ २ १ ३ ५रर २ १ १११

निहोतासत्सिबर्हाऽ२३इषी| बर्हाऽ२इषाऽ२३४औहोवा| बर्हीऽ३षीऽ२३४५||

४ ५ ४र५र ४ ४ १ र र २ २ २ २ ३ ५ १ २

–अग्नआयाहि| वाऽ५इतयाइ| गृणानोहव्यदाऽ१ताऽ३ये| निहोताऽ२३४सा| त्साऽ२३इबाऽ३|

१ ५ ५

हाऽ२३४षोऽ६हाइ||

( इत्यारभ्य यथाशक्ति एकंसाम अर्धाध्यायमध्यायंवाप्रत्यहमधीयानो मंत्र ब्राह्मणंचसमाप्य पुनरेवमेवारभ्य समाप्येत्; यत्किंचिदध्ययनाभावे वामदेव्यं पठेत् )

३ र ४ २ ४र ५ १ र २१र २ १ २ र २

–ओम् काऽ५या| नश्चाऽ३इत्राऽ३आभुवात्| ऊ| तीसदावृधःस| खा| औऽ३होहाइ|

१ २ ३ र२ १ १ २

कयाऽ२३शचाइ| ष्ठयौहोऽ३| हुम्माऽर| वाऽ२र्तोऽ३५हाइ||

३ र ४ २ ४र५ १ २र१ र २१ २ र २ १ २

–ओम् काऽ५स्त्वा|सत्योऽ३माऽ३दानाम्|मा|हिष्ठोमात्सादन्ध|सा|औऽ३होहाइ|दृढाऽ२३चिदा|

३ र २ १ १ २

रुजौहोऽ३| हुम्माऽर| वाऽ२सोऽ३५हाइ||

३ र ४ २ ४र ५ १ २र१ २र१ २ र २ १ २

–आऽ५भी|षुणाऽ३ःसाऽ३खीनाम्|आ|विताजराइतृ|णाम्|औऽ२३होहाइ|शताऽ२३म्भवा|

३ र २ १ १ २

सियौहोऽ३| हुम्माऽर| ताऽ२योऽ३५हाइ||

334

१ २ ३१ २र ३ २ ३१ ३२ १ २ २ ३ १ २ ३२

–ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||

१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२

कस्त्वा सत्यो मदानां मँ हिष्ठो मत्सदन्धसः| दृढा चिदारुजे वसु||

३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२

अभी षु णः सखीनामविता जरितृणाम्| शतं भवास्यूतये||

३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२

–ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|

३ २ ३ २ ३ १ २ ३ २ ३ २३ १२

स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|

३ २ ३ २३ १ २

ओम् स्वस्ति नो बृहस्पतिर्दधातु||

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

–ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

–ओम् नमोब्रह्मणे नमोब्राह्मणेभ्यो नमआचार्येभ्यो नमऋषिभ्यो नमोदेवेभ्यो नमोवेदेभ्यो नमोवायवेचमृत्यवेचविष्णवेच नमोवैश्रवणायचोपजायच|| ( इति त्रिः पठेत् )

— अनेन ब्रह्मयज्ञाख्येन कर्मणा श्रीभगवान् परमेश्वरः प्रीयताम् नमम|

—ओम् तत्सद् ब्रह्मार्पणमस्तु|

—यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु;न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|

ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|

|| <u>इति ब्रह्मयज्ञ प्रयोगः</u> ||

335

|| <u>अथ तर्पण प्रयोगः</u> ||

— आचम्य प्राणानायम्य|

<u>संकल्पः</u>—अद्यपूर्वोच्चरित———शुभपुण्यतिथौ० श्रीपरमेश्वर प्रीतयर्थं देवपितृमनुष्याणां तर्पणमहं करिष्ये|

<u>विनियोगः</u>—बृहत्सामनो भारद्वाजो बृहतीन्द्रः; रथंतरस्य वसिष्ठो बृहतीन्द्रेशानौ; उन्नयेत्यस्य आदित्योनुष्टुबात्मा जपे विनियोगः|

२रर र र २ र १र र २ ३ ५ १ २ ३र४र५

—ओम् औहोइत्वामिद्धिहवामहाऽ३ए| सातौवाजा| स्याकाराऽ२३४वाः| तुवाऽ३४| औहोवा|

२१ २ २ ३ ५ १र र २ ३र४र५ १ १

वृत्राइषुवाइ| द्रासाऽ३१त्| पतिन्नाऽ२३४राः| त्वांकाष्ठाऽ३४| औहोवा| सूऽरआर्वाऽ२३४|

५ ५ १

ताः| उहुवाऽ६हाउ| वा| हस्||

२ र र र १ २र र रर १ २

—ओम् आभित्वाशूरनोनुमोवा| आदुग्धाइवधेनवईशानमस्यजगतः| सुवाऽ२३ईशाम्|

१   र२ १     ४    १       र   र ५    ५     १
आइशानमाऽ२३इन्द्राऽ३| तास्थूऽ२३४षा| ओवाऽ६| हाउवा| अस्||
     १   २र  १    २र   १ र २१२   १२र  १     २ र र१र    २र  १
–ओम् उन्नयामि|होइ|(३)आदित्यंप्रांचंयन्तमुन्नयामि|होइ|(३) अहोरात्राण्यरित्राणि|होइ|(३)
र   २     १ र  र र   र   २     १      र  र  रर   २
द्यौर्नौर्हाउ|(३) तस्यामसावादित्यईयतेहाउ|(३) तस्मिन्वयमीयमानईयामहेहाउ|(३)
१रर   २     १रर  २    २      १रर२  १  २ र     १रर२   १   २३  १११
ईयामहेहाउ|(२) ईयामहेऽ३| हाउवा| प्रियेधाम ँस्त्रियक्षरे|(२) प्रियेधाम ँ स्त्रियक्षरेऽ२३४५||
( ततः प्राङ्मुखः पातितदक्षिणजानुर्दक्षिणहस्ते कुशत्रयः शुक्लैस्तिलैः कुशाग्रैर्देवतीर्थेन देवान्जलाशयात्प्रादेशमात्र हस्तांजलिमुद्धृत्यतर्पयेत् )
–ओम् नमोब्रह्मणे नमोब्राह्मणेभ्यो नमआचार्येभ्यो नमऋषिभ्यो नमोदेवेभ्यो नमोवेदेभ्यो

नमोवायवेचमृत्यवेचविष्णवेच नमोवैश्रवणायचोपजायच|| ( इति कृतांजलिः पठित्वा ब्रह्मादींस्तर्पयेत् )

336

–ओम् ब्रह्माणं तर्पयामि० ओम् रुद्रं तर्पयामि० ओम् विष्णुं तर्पयामि०
ओम् प्रजापतिं तर्पयामि० ओम् वेदांस्तर्पयामि० ओम् देवांस्तर्पयामि०
ओम् छंदा ँ सि तर्पयामि० ओम् ऋषीं तर्पयामि० ओम् पुराणाचार्यांस्तर्पयामि०
ओम् गंधर्वास्तर्पयामि० ओम् इतरांस्तर्पयामि० ओम् मासं तर्पयामि०
ओम् संवत्सरंसावय तर्पयामि० ओम् देवीस्तर्पयामि० ओम् अप्सरस तर्पयामि०
ओम् देवानुगांस्तर्पयामि० ओम् नागांस्तर्पयामि० ओम् सागरांस्तर्पयामि०
ओम् पर्वतांस्तर्पयामि० ओम् सरितस्तर्पयामि० ओम् दिव्यान्मनुष्यांस्तर्पयामि०
ओम् इतरान्मनुष्याणांस्तर्पयामि० ओम् यक्षांस्तर्पयामि० ओम् रक्षांसि तर्पयामि०
ओम् सुपर्णांस्तर्पयामि० ओम् पिशाचांस्तर्पयामि० ओम् पृथिवीं तर्पयामि०
ओम् ओषधीस्तर्पयामि० ओम् पशूंस्तर्पयामि० ओम् वनस्पतिंस्तर्पयामि०

ओम् भूतग्रामंचतुर्विधं तर्पयामि|

( अपसव्यं )

(दक्षिणाभिमुखः पातितवामजानुः कृष्णैस्तिलैर्द्विगुणदर्भैः पितृतिर्थगतैः पितृतीर्थेन तर्पयेत्)
( तिल लेवानो विधि–मातापिताना सांवत्सरिकना अने महालयश्राद्धना दिवसे पर्वणिना दिवसे अने तीर्थादिकमां तिल लेवा निषेध नथी; पण ते सिवाय रवी मंगळ अने शुक्रवारे तथा मघानक्षत्रे रात्रि पडवो, छठ, सातम, अगियारस अने तेरश ए तिथियोए पोताना जन्मदिवसे अने उदय तथा अस्त वखत, विवाह, जनोइ, चौल अने नांदीश्राद्धनी पछी अनुक्रमे एकवर्ष, छमास, त्रणमास अने एकमास एटला दिवस

वर्जिने तीर्थे जमणा पोचा उपर तिल राखी डाबा हाथ वडे प्रति नामो लेता जइ अने घेर तर्पणना पात्रमां तिल नाखी तर्पण करवुं )
–ओम् यमं तर्पयामि० ओम् यमपुरुषां तर्पयामि० ओम् कव्यवाडनलं तर्पयामि०
ओम् सोमं तर्पयामि० ओम् अर्यम्णं तर्पयामि० ओम् अग्निष्वात्तांस्तर्पयामि०

ओम् सोमपितांस्तर्पयामि० ओम् बर्हिषदस्तर्पयामि|

( अथ स्वान्पितृन्प्रत्येकं त्रिभिस्त्रिभिरंजलिभिस्तर्पयेत् )
–अमुकगोत्रं पितरं अमुकशर्माणं तर्पयामि० अमुकगोत्रं पितामहं अमुकशर्माणं तर्पयामि०
अमुकगोत्रं प्रपितामहं अमुकशर्माणं तर्पयामि०अमुकगोत्रां मातरं अमुकीदेवीदां तर्पयामि०
अमुकगोत्रांपितामहीं अमुकीदेवीदांतर्पयामि०अमुकगोत्रां प्रपितामहींअमुकीदेवीदांतर्पयामि०
अमुकगोत्रांसापत्नमातरं अमुकीदेवीदांतर्पयामि०अमुकगोत्रं मातामहंअमुकशर्माणंतर्पयामि०
अमुकगोत्रंप्रमातामहंअमुकशर्माणं तर्पयामि०अमुकगोत्रंवृद्धप्रमातामहंअमुकशर्माणंतर्पयामि०
( एताः प्रत्येकं त्रिभिस्त्रिभिरंजलिभिः; मातामह्यादिकां स्तवेकैकांजलिना तर्पयेत् )



अमुकगोत्रांमातामहींअमुकीदेवीदां तर्पयामि० अमुकगोत्रांप्रमातामहींअमुकीदेवीदांतर्पयामि०
अमुकगोत्रांवृद्धप्रमातामहींअमुकीदेवीदां तर्पयामि० अमुकगोत्रांपत्नींअमुकीदेवीदांतर्पयामि०
अमुकगोत्रं तनयं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रां तनयां अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रं पितृव्यकं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं मातुलं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं भ्रातरं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रां पितृभगिनीं अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रां मातृभगिनीं अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रां भगिनीं अमुकीदेवीदां ( सापत्यां साधवां )तर्पयामि०
अमुकगोत्रं श्वसुरं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं सद्गुरुं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं शिष्यं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
अमुकगोत्रं आपतं अमुकशर्माणं ( सपत्नीकं सापत्यं )तर्पयामि०
( स्मृत्युक्त तर्पणीयानांतु पुण्याति शयत्वाद्यथा संभवं तर्पणं कर्तव्यं )

–पितृव ँ शामातृव ँ शौयेचान्ये मत्त उदकमर्हंतितांस्तर्पयामि|

( कण्ठावलंबित )

( कुशमध्यैर्मनुष्यतीर्थेनोर् ऊद्धवजानुः प्रत्यङ्मुखः प्रत्येकं द्विस्तर्पयेत् )
–ओम् सनकं तर्पयामि० ओम् सनंदनं तर्पयामि० ओम् सनातनं तर्पयामि०
ओम् कपिलं तर्पयामि० ओम् आसुरिं तर्पयामि० ओम् वोढुं तर्पयामि०

ओम् पंचशिखं तर्पयामि|

–येषां नपिता नभ्राता नपुत्रो नान्यगोत्रिणः; ते सर्वे तृप्तिमायांतु मयोत्सृष्टैः कुशैः सदा|
( इति मंत्रेण कुशांस्त्यक्त्वा सव्येनाचम्य; ततोपसव्येनैव दक्षिणाभिमुखस्तिष्ठन्नपसव्येन् स्थले स्नानवस्त्रैक देशं निष्पीडयेत्; इति गृहे निषिद्धं )

–ये चास्माकंकुले जाता अपुत्रा गोत्रिणो मृताः;ते गृह्णंतु मयादत्तं वस्त्र निष्पीडनोदकं|



( सव्यं ) ( आचमनं ) (सूर्यादिभ्यस्तत्तन्मंत्रेणार्ध्यं दद्यात् )

विनियोगः–बण्महानिति जमदग्निर्बृहस्पतिः सूर्यः अर्घप्रदाने विनियोगः|

२ ३ १ २ ३ १२ ३१ २

ओम् बण्महा ँ असि सूर्य बडादित्य महा ँअसि|

३१ २ ३ १ २३ १ २ ३ १ २ ३ १ २

महस्ते सतो महिमा पनिष्टम मह्ना देव महा ँ असि्||–ओम् भूर्भुवः स्वः सूर्य एषतेर्घः|

विनियोगः– आप्यायस्वेति गौतमो गायत्री सोमः अर्घप्रदाने विनियोगः|

ओम् आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम्| भवा वाजस्य संगथे||

–ओम् भूर्भुवः स्वः सोम एषतेर्घः|

विनियोगः– अग्निमूर्द्धेति विरुपो गायत्री भौमः अर्घप्रदाने विनियोगः|

३ २ ३ २ ३२ ३ १ २र ३ २ ३२ ३ १ २र
–ओम् अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम्| अपा ँ रेता ँ सि जिन्वति||

–ओम् भूर्भुवः स्वः भौम  एषतेर्घः|

विनियोगः– अग्नेविवस्वतेति प्रस्कण्वो बृहती बुधः अर्घप्रदाने विनियोगः|

२ ३ १ २  ३१२  ३ १  २र    २  ३ १२     ३ २३ २ ३ १ २३१२

ओम् अग्नेविवस्वदुषसश्चित्रँराधो अमर्त्य|आ दाशुषे जातवेदो वहात्वमद्यादेवाँउषर्बुधः||

–ओम् भूर्भुवः स्वः बुध  एषतेर्घः|

विनियोगः–बृहस्पतेइति अप्रतिरथः त्रिष्टुप्बृहस्पतिः बृहस्पतिः अर्घप्रदाने विनियोगः|

१२  ३ १२   ३  १२   ३ १  २र   ३ १२

–ओम् बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः|

३  १   २र  ३ २ ३ १   २र  १ २   ३ १  २र

प्रभन्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्||

–ओम्भूर्भुवःस्वःबृहस्पतेएषतेर्घः|

339

विनियोगः–शुक्रंतेइति भरद्वाजः त्रिष्टुप् शुक्रः अर्घप्रदाने विनियोगः|

३   २  ३ १ २३ १ २ ३ १  २र ३  १२३  १ २

–ओम् शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि|

२  ३  २ ३ १   २र      ३१ २    ३२ ३ १ २

विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु||

–ओम् भूर्भुवः स्वः शुक्र  एषतेर्घः|

विनियोगः–शन्नःसिन्धुद्विपो गायत्री शनिः अर्घप्रदाने विनियोगः|

१ २ ३ २३१ २ ३ १ २ ३१२ २उ ३१ २

ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||

–ओम्भूर्भुवःस्वःशनेएषतेर्घः|

विनियोगः–कयानश्चित्रेति वामदेवो गायत्री राहुः अर्घप्रदाने विनियोगः|

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२

ओम् कयानश्चित्र आभुवदूती सदावृधः सखा| कया शचिष्ठया वृता||

–ओम् भूर्भुवः स्वः राहो एषतेर्घः|

विनियोगः–केतुंकृण्वन्निति मधुच्छन्दा गायत्री केतुः अर्घप्रदाने विनियोगः|

३ २ ३ १ २ ३२३ १२ ३१ २ २३१ २

ओम् केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे| समुषद्भिरजायथाः||

–ओम्भूर्भुवःस्वःकेतवएषतेर्घः|

– अनेन यथाशक्ति देवपितृमनुष्य तर्पणाख्येन कर्मणा श्रीभगवान् मम समस्त पितृ स्वरूपि जनार्दन वासुदेवः प्रीयताम् नमम|

–ओम् तत्सद् ब्रह्मार्पणमस्तु|

–ओम् श्री गयागदाधरस्तृप्यतु|

–यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु;न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|

ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|

## || इति तर्पण प्रयोगः ||



( सव्यं )

**-**तिथिर्विष्णुस्तथा वारो नक्षत्रं विष्णुरेव च; योगश्च करणं चैव सर्वं विष्णुमयं जगत्|

संकल्पः–ओम् विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य अद्य श्री ब्रह्मणो द्वितीये परार्धे अह्वो द्वितीये यामे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे

अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भारतवर्षे भरतखण्डे जम्बुद्वीपे आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे कन्याकुमारिकानाम्नि क्षेत्रे अमुकनद्याःतीरे शालिवाहनशके बौद्धावतारे अस्मिन् वर्तमाने अमुकनामकेसंवत्सरे अमुकायनगते मार्तण्डमण्डले अमुकऋतौ शुभकारिणि अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकदिवसनक्षत्रे अमुकराशिस्थितेचन्द्रे अमुकराशिस्थितेसूर्ये अमुकराशिस्थितेदेवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं गुणगणविशेषेण विशिष्टायां शुभपुण्यतिथौ कुरुकुत्स संज्ञकानां विश्वेषां देवानां ( अपसव्यम् ) अमुकगोत्राणां पितृपितामहप्रपितामहानां सपत्नीकानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यस्वरूपाणां अमुकगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम सपत्नीकानां अमुकामुकामुकशर्माणां वसुरुद्रादित्यस्वरूपाणां तथा च अमुकगोत्राणां अस्मत्पत्न्याद्याप्तानाम्समस्तपूर्वजानाम् अमुकामुकानां वसुरूपाणां मम पितुः कन्यागते सवितरि विश्वेदेवपूर्वकम् अर्घ्यपिण्डसहितं गयागमनादिफलप्राप्त्यर्थं पार्वणैकोद्दिष्टविधिना सकृन्महालय अपरपक्षश्राद्धं करिष्ये|

( सव्यं )

संकल्पः– अद्येत्यादि०–––शुभपुण्यतिथौ ( अपसव्यम् ) मम पितुः करिष्यमाण सकृन्महालय अपरश्राद्धांगभूतं ( सव्यं ) श्री विष्णोः यथालाभोपचारैः पूजनं करिष्ये|

( ताम्रपात्रे शुद्धोदकमापूर्य तत्र गंधादिनिक्षिप्य गायत्र्यादिमंत्रैः स्तजलमभिमंत्र्यतेनजलेन पूजासामग्रींसंप्रोक्ष्य प्रार्थयेत्; विष्णुपूजोपहाराणां पवित्रतास्तु )

संकल्पः–पूजन अधिकारार्थ पुरुषसूक्तेन( नाममन्त्रेण ) देहन्यासान् करिष्ये|

( नाममंत्रेण देहन्यासान् )

ओम्– अंगुष्ठाभ्यां नमः० नमो–तर्जनीभ्यां नमः० भगवते–मध्यमाभ्यां नमः०

वासुदेवाय– अनामिकाभ्यां नमः० नमः–कनिष्ठिकाभ्यां नमः०

ओम्नमोभगवतेवासुदेवाय नमः–करतलकरपृष्ठाभ्यां नमः|

ओम्–हृदयाय नमः०नमो–शिरसे स्वाहा०भगवते–शिखायै

वषट्०वासुदेवाय–कवचायहुम्० नमः–नेत्रत्रयाय वौषट्०

ओम्नमोभगवतेवासुदेवायनमः– अस्त्राय फट्|



विनियोगः–ओम् इदं विष्णुरित्यादिनां षण्णां मेधातिथिः ऋषिः गायत्रीछन्दः विष्णुरिन्द्रश्च देवता; सहस्त्रशीर्षेति पन्चानां नारायणः ऋषिः अनुष्टुप्छन्दः पुरुषो देवता; सोमः पवतेति वशिष्ठः ऋषिः त्रिष्टुप्छन्दः विश्वेदेवा देवता; किमित्तेतित्रयाणां वशिष्ठः ऋषिः त्रिष्टुप्छन्दः विष्णुर्देवता; प्रथश्चेत्यस्य प्रथः ऋषिः त्रिष्टुप्छन्दः धाता सविता विष्णुर्वा देवता पुरुषसूक्तेन न्यासे ( पूजने च ) विनियोगः|

१, आवाहनम्|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्|समूठमस्य पा ँसुले||(वामहस्ते–डाबाहाथे)

२, आसनम्|

१ २ ३१ २र ३ १ २ ३ १ २र २ ३१२ ३ १२

त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः| अतोधर्माणिधारयन्||(दक्षिणहस्ते–जमणाहाथे)

३, पाद्यम्|

२ ३ १२ ३ १ २ ३ १२ ३२ १२ ३ २ ३ १ २

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे| इन्द्रस्य युज्यःसखा|| (वामपादे–डाबापगे)

४, अर्घ्यम्|

१ २र ३२ ३१ २र ३ १२ ३ २३ २३१ २

तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्|| (दक्षिणपादे–जमणापगे)

५, आचमनीयम्|

१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२३२

तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते|विष्णोर्यत्परमंपदम्||(वामजानुनि–डाबाठींचणे)

६, स्नानम्|

१२ ३१ २ ३ २३ १ २ ३२ ३ २उ३ १ २

अतो देवा अवन्तु नोयतोविष्णुर्विचक्रमे|पृथिव्याअधिसानवि||(दक्षिणजानुनि–जमणाठींचणे)

७, वस्त्रम्|

३१ २ ३ १२ ३ २ ३१ २

सहस्त्रशीर्षाः पुरुषः सहस्त्राक्षः सहस्त्रपात्|

१र २र ३ १ २ ३ १ २ ३ २

स भूमि ँ सर्वतो वृत्वा त्यतिष्ठद्दशा ँ गुलम्|| ( वामकट्याम्–डाबीकमरे )

८, उपवीतम्|

३ २ ३२उ ३ १२३ १ २ ३ १२ ३१ २

त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः|

२ ३ २३क २र ३२ ३ २

तथा विष्वङव्यक्रामदशनानशने अभि|| ( दक्षिणकट्याम्–जमणीकमरे )

६, गंधम्|

१२ ३२उ ३ २ ३२उ ३ १ २

पुरुष एवेद ँ सर्वं यद्भूतं यच्च भाव्यम्|

१ २ ३ १ २३ १२ ३ १२ ३ १२ ३ २

पादोऽस्य सर्वाभूतानि त्रिपादस्या मृतं दिवि|| ( नाभौ–नाभिए )

१०, पुष्पम्|

१ २ ३२र ३ १ २ ३ १२ ३ १२३ १ २र३१ २र ३ १२

तावानस्य महिमा ततो ज्याया ँ श्च पूरुषः|उतामृतत्वस्येशानोयदन्ने नातिरोहति||(हृदये)

११, धूपम्|

१ २ ३ १२ ३२ ३ २ ३ १२ २३ १ २र ३२उ ३ १२ ३२

ततो विराडजायत विराजो अधि पुरुषः| सजातो अत्यरिच्यतपश्चाद्भूमिमथो पुरः||(कंठे)

१२, दीपम्|

१ २ ३ १ २३ १ २३ २ ३ १ २ ३ १ २३ २

सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः|

३ १ २र३१ २र ३१ २ ३ १ २र

जनिताग्नेर्जनिता सूर्यस्य जनितेंद्रस्य जनितोत विष्णोः|| ( वामबाहौ–डाबाखभे )

१३, नैवेद्यम्|

१ २र ३२ ३ २ ३ १ २र३१ २ ३ १ २

किमित्ते विष्णो परिचक्षि नाम प्रयद्ववक्षे शिपिविष्टो अस्मि|
१ २र ३ १ २र ३२र१३ १२ ३ २ ३१ २
मावर्पो अस्मदपगूह एतद्यदन्यरूपः समिथे बभूथ|| ( दक्षिणबाहौ–जमणाखभे )
343
१४, दक्षिणा–तांबूलम्|
१ २र३ १ २ ३२ ३१ २ ३१ २ ३ २
प्रतत्ते अद्य शिपिविष्ट हव्यमर्यः श ँ सामि वयुनानि विद्वान्|
१ २ ३२३ १२ ३ १ २ ३ १ २र ३ २
तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके|| ( मुखे )

१५, प्रदक्षिणाम्|
१२ ३ १ २र ३ १ २ ३ २
वषट्ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम्|
१ २ ३ २३ १ २ ३ १ २ ३ २ ३ १ २
वर्धतु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः|| ( नेत्रयोः )

१६, नमस्कारः|
१२ ३ १ २ ३ १२ ३ १ २र ३ १२ ३२
प्रथश्च यस्य सप्रथश्च नामानुष्टु भस्य हविषो हविर्यत्|
३ १ २र ३२ ३ १ २ ३१ २र ३ १२
धातुर्द्युतानात्सवितुश्च विष्णो रथंतर माजभारा वसिष्ठः|| ( मूर्ध्नि–मस्तके )

संकल्पः–श्री विष्णोः यथालाभोपचार–पूजनविधेः परिपूर्णतास्तु|

( सव्यं ) ( यवानादाय )
अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः देवकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
दैवे क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
कुरुकुत्ससंज्ञकेभ्यो देवेभ्यो नमः एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोघ्र्यं|
इदमत्र| चंदनं पुष्पं|
( अपसव्यं ) ( तिलानादाय )
१, अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
अमुकगोत्रा अस्मत् पितृपितामहप्रपिमतामहा सपत्नीकाः अमुकामुकामुकशर्माणः
वसुरुद्रादित्यस्वरूपा एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोघ्र्यं| इदमत्र|चंदनंपुष्पं|
२, अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिर्मातामहकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
मातामह क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|

अमुकगोत्रा अस्मन्मातामहप्रमातामहवृद्धप्रमातामहा सपत्नीकाः अमुकामुकामुकशर्माणः वसुरुद्रादित्यस्वरूपा एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं| एतद्वोर्घ्यं| इदमत्र|चंदनंपुष्पं|
३, अक्रोधनैः शौचपरैः सततं ब्रह्मचारिभिः| भवितव्यं भवद्भिश्च मया च श्राद्धकारिणा|
सर्वायासविनिर्मुक्तैः कामक्रोधविवर्जितैः| भवद्भिः पितृकार्यं नः संपाद्यं च प्रसीदत|
स्वागतं; सुस्वागतं|
पित्र्ये क्षणः क्रियतां; करिष्यामि| तथा प्राप्नोतु भवान् ; प्राप्ताः स्मः|
अस्मत्पत्न्याद्याप्तान्ताः समस्तपूर्वजा वसुरूपा एतद्वः पाद्यं पादावनेजनं पादप्रक्षालनं|
एतद्वोर्घ्यं| इदमत्र| चंदनं पुष्पं|

345

( सव्यं ) आचमनं|
ओम् भूर्भुवः स्वः समाध्वं; ओम् समास्म्हे|
( अपसव्यं )
ओम् भूर्भुवः स्वः समाध्वं; ओम् समास्म्हे|
( सव्यं ) आचमनं| प्राणायामः|
गायत्रींगायत्रंचसामपठेत्|

२उ३क २र १ २३ १ २र ३ १२ ३१ २ २ ३ १ २ ३ १२

ओम् भूर्भुवः स्वः| तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमही| धियो योनः प्रचोदयात्||

१ र १ र र र २१र र २ १ १

ओम् तत्सवितुर्वरेणियोम्| भार्गोदेवस्यधीमाहीऽर| धियो योनः प्रचोऽ१२१२| हुम्| आऽर|

१ १११

दायो| आ२३४५||

( अपसव्यं ) प्रसादं कृत्वा श्राद्धं कारयध्वं; कुरुष्व|
अग्निष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम्|तथाबर्हिषदः पान्तु याम्यां येपितरःस्थिताः|
प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः| ऊर्ध्वतस्त्वर्यमा रक्षेत् कव्यवालनलोप्यधः|
रक्षोभूतपिशाचेभ्यः तथैवासुरदोषतः| सर्वतश्चाधिपस्तेषां यमो रक्षां करोतु मे|
तिलाश्च रक्षन्त्वसुरान् दर्भा रक्षन्तु राक्षसान्| पंक्तिर्वै श्रोत्रियो रक्षेदतिथिः सर्वरक्षकः|

( सव्यं ) अस्तु|
`श्राद्धभूमौ गयां ध्यात्वा ध्यात्वा देवं गदाधरं| ताभ्यां चैव नमस्कारं ततः श्राद्धं प्रवर्तते|
सप्तव्याधादशार्णेषु मृगाः कालन्जरे गिरौ| चक्रवाकाः सरद्वीपे हंसाः सरसि मानसे|
तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणावेदपारगाः| प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ|
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च| नमः स्वाहायै स्वधायै नित्यमेव नमो नमः| (३)
गयायै नमः| गदाधराय नमः|
गयायां पितृरूपेण स्वयमेव जनार्दनः|तं ध्यात्वा पुण्डरीकाक्षं मुच्यते च ऋणत्रयात्|
अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपिवा| यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः|



( ततस्ताम्रपात्रे प्रणीतासंज्ञके शुद्धोदकमापूर्य यवतिलगंधादीन्निक्षिप्य कुशाग्रैस्तज्जलं संस्पृश्य दशधा गायत्रीं संजप्य प्रदक्षिणमालोडयन् )
विनियोगः–एतोन्विन्द्रेति तिसृणां तिरश्च्यनुष्टुबिन्द्रः; तद्विष्णोः परमं पदमिति मेधातिथिः नृचद्गायत्री श्राद्धपाकप्रोक्षणाय जलाभिमंत्रणे विनियोगः|

२३ २ ३ १ २ ३२ ३२३ १ २ ३२ ३ १ २३ १ २ ३२ ३१ २
ओम् एतोन्विन्द्र ँस्तवाम शुद्ध ऀशुद्धेन साम्ना| शुद्धैरुक्थैर्वावृध्वास ँ्शुद्धैराशीर्वान्ममत्तु||
१ २ ३२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २ ३१ २र ३ १ २
इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरुतिभिः| शुद्धोरयिनिं धारय शुद्धो ममद्धि सोम्य||
१ २ ३ १ २र ३२ ३ १ २र ३ १ २३ २ ३१ २ ३ १ २र
इन्द्र शुद्धो हि नो रयि ँ शुद्धो रत्नानि दाशुषे|शुद्धोवृत्राणिजिघ्नसेशुद्धोवाज ँसिषाससि||
१ २र ३ २ ३१ २र ३ १२ ३ २ ३२३१ २
तद्विष्णोः परमं पद ँ सदा पश्यन्ति सूरयः| दिवीवचक्षुराततम्||
१ २र ३ १२ ३ २ ३ १ २ २ ३ १ २३२ ३२
तद्विप्रासो विपन्युवो जागृवा ँ सः समिन्धते| विष्णोर्यत्परमं पदम्||
१२ ३१ २ ३ २३ १ २ ३२ ३ २उ ३ १
अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे| पृथिव्या अधिसानवि||

(एभिर्मंत्रैर्जलमभिमंत्र्य कुशाग्रगृहितजलेन अपसव्येन श्राद्धोपहारान्पाकांश्चप्रोक्षेत् )
( अपसव्यं )
उदक्यादि क्षुद्रदृष्टिनिपतिताः पाकादिदोषाः पाकादिनां पवित्रतास्तु; अस्तु|
( सव्यं )
भवतांप्रसादात्श्राद्धोपहाराणां पाकादीनां पवित्रतास्तु; अस्तु|
देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु; अस्तु|
संकल्पः– अद्येत्यादि शुभपुण्यतिथौ कुरुकुत्ससंज्ञकानां विश्वेषां देवानां ( अपसव्यं ) अमुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानाम् सपत्नीकानां अमुकामुकामुकशर्माणां वसुरुद्रादित्यस्वरूपाणां अमुकगोत्राणां अस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् ्सपत्नीकानां अमुकामुकामुकशर्माणां वसुरुद्रादित्यस्वरूपाणां तथा च पत्न्याद्याप्तानाम्समस्तपूर्वजानाम् अमुकामुकानां वसुरूपाणां एकोद्दिष्टानां कन्यागते सवितरि विश्वेदेवपूर्वकम् अर्घ्यपिण्डसहितं गयागमनादि फलप्राप्त्यर्थं युष्मदनुज्ञया पार्वणे एकोद्दिष्टविधिना सकृन्महालय अपरपक्ष श्राद्धं करिष्ये; कुरुष्व|



( सव्यं )
कुरुकुत्ससंज्ञकनामभ्यो विश्वेभ्योदेवेभ्यइदमासनं स्वाहा; स्वासनमस्तु|
प्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

( अपसव्यं )
१, अमुकगोत्रेभ्यःपितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यस्वरूपेभ्यः इदमासनं स्वधा; स्वासनमस्तु|
हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

२, अमुकगोत्रेभ्यःमातामहप्रमातमहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यस्वरूपेभ्यः इदमासनं स्वधा; स्वासनमस्तु|
हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|

३, अमुकगोत्रेभ्यः अस्मत्पत्न्याद्याप्तानतेभ्यःसमस्तपूर्वजेभ्यः अमुकामुकभ्यः वसुरूपेभ्यः इदमासनं स्वधा; स्वासनमस्तु| हस्तप्रक्षालनं जलं दत्वा; उपग्रहविष्टरार्था इमेकुशाः|
( सव्यं ) (यवानादाय )
कुरुकुत्ससंज्ञकान् विश्वान्देवानावाहयिष्ये; आवाहय|

ओम् विश्वेदेवास आगत श्रृणुतामइम ँ हवं| एदंबर्हिर्निषीदत||( जानुमुन्मुच्य )
विश्वेदेवाः श्रृणुतेम ँ हवम्मे येअंतरिक्षे यउपद्यविष्ढ|
ये अग्निजिह्वाउतवा यजत्रा आसद्यास्मिन् बर्हिषि मादयद्ध्वं||
औषधयः समवदंत सोमेनसहराज्ञा| यस्मै कृणोति ब्राह्मणस्त ँ राजन्पारयामसि||
( प्रदक्षिणं यवान्विकीर्य कृतांजलिः पठेत् )
आगच्छन्तु महाभागा विश्वेदेवा महाबला|
ये चात्र विहिता श्राद्धे सावधाना भवन्तु ते|| भवाम||



( अपसव्यं ) ( तिलानादाय )
१, अमुकगोत्रान् अस्मत्पितृपितामहप्रपितामहान् सपत्नीकान् अमुकामुकामुकशर्मणः वसुरुद्रादित्यस्वरूपान् आवाहयिष्ये; आवाहय|
ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितृन्हविषे अत्तवे||
एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः| दत्तास्मभ्यं द्रविणेहभद्र ँ रयिंचनः सर्ववीरं नियछत|| ( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||
अपहता असुरा रक्षा ँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )
२, अमुकगोत्रान् अस्मन्मातामहप्रमातामहवृद्धप्रमातामहान सपत्नीकान्
अमुकामुकामुकशर्मणः वसुरुद्रादित्यस्वरूपान् आवाहयिष्ये; आवाहय|
ओम् उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितृन्हविषे अत्तवे||
एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः| दत्तास्मभ्यं द्रविणेहभद्र ँ रयिंचनः सर्ववीरं नियछत|| ( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||
अपहता असुरा रक्षा ँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )

३, अमुकगोत्रान् अस्मत्पत्न्याद्याप्तान्तान् समस्तपूर्वजान् अमुकामुकान्
वसुरूपानआवाहयिष्ये; आवाहय|
ओम्  उशन्तस्त्वा निधीमह्युशंतः समिधीमहि| उशन्नुशत आवह पितृन्हविषे अत्तवे||
एत पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः|
दत्तास्मभ्यं द्रविणेहभद्रँ रयिंचनः सर्ववीरं नियछत|| ( जानुमुन्मुच्य अप्रादक्षिण्येन तिलान्विकीर्य  कृतांजलिः पठेत् )
ओम् आयन्तुनः पितरः सोम्यासोग्निष्वात्ताः पथिभिर्देवयानैः|
अस्मिन्यज्ञे स्वधयामदन्तो धिब्रुवन्तु ते वन्त्वस्मान् ||
अपहता असुरा रक्षाँ सिवेदिषदः| ( अनेन पुरतस्तिलान्प्रक्षिपेत् ) ( उदकोपस्पर्शनं )



( सव्यं ) ( विश्वेषांदेवानांपागग्रंपात्रद्वयंमेकंवाप्रागग्रदर्भोपरिन्यसेत् )
( सकुशंजलमादाय )
१ २ ३ २३१ २ ३ १ २ ३१२ २उ ३१ २
ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||
( यवानादाय )
ओम् यवोसियवयास्मद्वेषो यवयारातीः||
इदमत्र| चंदनं पुष्पं|
देवपात्रे संपन्ने; सुसंपन्ने|

( अपसव्यं ) ( पितृणां दक्षिणाग्रदर्भोपरि दक्षिणाग्राणि त्रीणित्रीणि पात्राणिस्तव्यानि )
( सकुशंजलमादाय )
१ २ ३ २३१ २ ३ १ २ ३१२ २उ ३१ २
ओम् शन्नो देवीरभिष्टये शन्नो भवन्तु पीतये| शंयोरभिस्त्रवन्तुनः||
( तिलानादाय )
ओम् तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः| प्रत्नवद्भिः प्रत्तः स्वधया
पितृन्लोकान्प्रीणाहि नः स्वाहा||
इदमत्र| चंदनं पुष्पं|
पितृपात्राणि संपन्नानि; सुसंपन्नानि|

अर्घदानम्|
( सव्यं )
स्वाहार्घ्या भवन्तु; अस्तु स्वाहा|
विश्वेभ्योदेवेभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः शँ स्योनाः सुहवा भवन्तु||
कुरुकुत्ससंज्ञका नामानो विश्वेदेवा एतद्वोर्घ्यं स्वाहा|

350

( अपसव्यं )
१, स्वधार्घ्या भवन्तु; अस्तु स्वधा|
पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः शँ स्योनाः सुहवा भवन्तु||
अमुकगोत्राः अस्मत्पितृपितामहप्रपितामहाः सपत्नीकाः अमुकामुकामुकशर्माः
वसुरुद्रादित्यस्वरूपाः एष वो अर्घः| ये चात्रत्वानुयांश्चत्वमनुतस्मैतेस्वधा||(उदकंसंस्पृश्य)
२, स्वधार्घ्या भवन्तु; अस्तु स्वधा|
पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः शँ स्योनाः सुहवा भवन्तु||
अमुकगोत्राः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीकाः अमुकामुकामुकशर्माः
वसुरुद्रादित्यस्वरूपाः एष वो अर्घः| ये चात्रत्वानुयांश्चत्वमनुतस्मैतेस्वधा||(उदकंसंस्पृश्य)
३, स्वधार्घ्या भवन्तु; अस्तु स्वधा| पितृभ्यो नमः इदं पुष्पं|
ओम् या दिव्या आपः पयसा सम्बभूवुर्या अन्तरिक्षा उत पार्थिवीर्याः|
हिरण्यवर्णा यज्ञिया स्तान आपः शिवाः शँ स्योनाः सुहवा भवन्तु||

अमुकगोत्रा अस्मत्पत्न्याद्याप्तान्ता समस्तपूर्वजा अमुकामुका वसुरूपा एष वो अर्घः| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा|| (उदकंसंस्पृश्य)(पात्रं न्युब्जंकृत्वापवित्राण्युपरिस्थाप्य)

गंधादिदानम्| ( सव्यं )

कुरुकुत्ससंज्ञकेभ्योनामभ्यो विश्वेभ्यो देवेभ्यो नमः अत्र० अयं वो गंधः; सुगंधः० यवमाच्छादनं० इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी;सुवाससी० इदं उपवीत; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०शेषोपचारार्थे यवकुशाः सुकुशाः|

यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|

ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|

यथादत्तं गंधाद्यर्चनं विश्वेभ्योदेवेभ्यः स्वाहा–इदं विश्वेभ्यो देवेभ्यो नमम|



( अपसव्यं )

१, अमुकगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यस्वरूपेभ्यः अत्र० अयं वो गंधः; सुगंधः० तिलमाच्छादनं० इदं पुष्पं;सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी० इदं उपवीत; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः०शेषोपचारार्थे तिलकुशाः सुकुशाः|

यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|

ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|यथादत्तं गंधाद्यर्चनं अमुकगोत्रेभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यस्वरूपेभ्यःस्वधा–इदंपितृपितामहप्रपितामहेभ्यो सपत्नीकेभ्योनमम|

२, अमुकगोत्रेभ्यः अस्मन्मातामहप्रमातमहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यस्वरूपेभ्यः अत्र० अयंवो गंधः;सुगंधः०तिलमाच्छादनं० इदं पुष्पं; सुपुष्पम्० इदं तुलसीदलं; सुतुलसीद्लं० इमेवाससी; सुवाससी० इदं उपवीत; सूपवीतं० अयं वो धूपः सुधूपः० इदं वो ज्योतिः; सुज्योतिः० शेषोपचारार्थे तिलकुशाः सुकुशाः|

यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|

ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|यथादत्तं गंधाद्यर्चनं अमुकगोत्रेभ्यः अस्मन्मातामहप्रमातमहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यस्वरूपेभ्यः स्वधा—इदं मातामहप्रमातमहवृद्धप्रमातामहेभ्यो सपत्नीकेभ्योनमम|

३, अमुकगोत्रेभ्यः अस्मत्पत्न्याद्याप्तानतेभ्यःसमस्तपूर्वजेभ्यः अमुकामुकभ्यः वसुरूपेभ्यः अत्र० अयं वोगंधः;सुगंधः० तिलमाच्छादनं०इदं पुष्पं;सुपुष्पम्०इदंतुलसीदलं;सुतुलसीद्लं० इमेवाससी; सुवाससी० इदं उपवीतं; सूपवीतं० अयंवोधूपःसुधूपः०इदंवोज्योतिः;सुज्योतिः०

शेषोपचारार्थे तिलकुशाः सुकुशाः|

यस्य स्मृत्या च नामोक्त्या तपःपूजाक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|

ओम् विष्णवे नमो विष्णवे नमो विष्णवे नमः|

यथादत्तं गंधाद्यर्चनं अमुकगोत्रेभ्यः अस्मत्पत्न्याद्याप्तानतेभ्यःसमस्तपूर्वजेभ्यः अमुकामुकभ्यः वसुरूपेभ्यः स्वधा—इदं पत्न्याद्याप्तानतेभ्यो समस्तपूर्वजेभ्यो नमम|

अस्य श्राद्धस्यार्चनविधेः परिपूर्णं|



( सव्यं ) ( आचमनं )

अग्नौकरणम्|

( अत्रसाग्निकेनापिब्राह्मणपाणावग्नौकरण होम कर्त्तवय इति देव याज्ञिकाः; स्मृति वाक्यभिप्रायेणाहुः; करेहुतं लौकिकेग्नौ प्रक्षिप्य दग्धव्यं; हुतावशिष्टमन्येषां पितामहादीनां पात्रेषु प्रक्षेप्तव्यं )

( अपसव्यं )

अद्येत्यादि0 सकृन्महालय अपरपक्ष श्राद्धनिमित्तं भवदनुज्ञया अप्सु(विप्रपाणाव्) अग्नौकरणं करिष्ये; कुरुष्व|

१, ओम् स्वाहाऽसोमाय पितृमते—इदं सोमाय पितृमते नमम|

२, ओम् स्वाहाऽग्नये कव्यवाहनाय—इदं अग्नये कव्यवाहनाय नमम|

( सव्यं )

ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे यवान् विकीर्य; न्युब्जाभ्यां दक्षिणोत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वाहा|
३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले|| ( विष्णोः हव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )

इदं अन्नादि यद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं

कुरुकुत्ससंज्ञकेभ्योनामभ्यो विश्वेभ्यो देवेभ्यः स्वाहा–इदं विश्वेभ्यो देवेभ्यो नमम|

( अपसव्यं )

१, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )

इदं अन्नादि यद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्रेभ्यः अस्मत् पितृपितामहप्रपिमतामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः यथा यथा विभागं वः स्वाहा–इदं पितृपितामहप्रपितामहेभ्यो सपत्नीकेभ्यो नमम|



२, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )

इदं अन्नादि यद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः यथा यथा विभागं वः स्वाहा–इदं मातामहप्रमातामहवृद्धप्रमातामहेभ्यो सपत्नीकेभ्यो नमम|

३, ओम् सत्यं त्वर्त्तेनपरिषिंचामि| ( इति अन्नमभ्युक्ष्य; अग्रे तिलान् विकीर्य; उत्तानसव्योत्तरहस्ताभ्यां पात्रमालभ्य )

ओम् पृथिवी ते पात्रं द्यौः पिधानं चटस्य(ब्राह्मणस्य) मुखे अमृते अमृतं जुहोमि स्वधा|

३२उ ३१ २ ३ १ २र ३२ १२ ३ २

ओम् इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्| समूठमस्य पा ँ सुले|| ( विष्णोः कव्यं रक्षस्व; इति अंगुष्ठमन्नेऽवघाय )
इदं अन्नादियद् दत्तं यच्च दास्यामि तत्सर्वं तृप्तिपर्यन्तं भोजनं अमुकगोत्रेभ्यः अस्मत्पत्न्याद्याप्तानतेभ्यःसमस्तपूर्वजेभ्यः अमुकामुकभ्यः वसुरूपेभ्यः यथा यथा विभागं वः स्वधा–इदं पत्न्याद्याप्तानतेभ्यो समस्तपूर्वजेभ्यो नमम|

( सव्यं )
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्मग्नौ ब्रह्मणा हुतं; ब्रह्मैव तेन गंतव्यं ब्रह्मकर्मसमाधिना|
हरिर्दाता हरिर्भोक्ता हरिरन्नं प्रजापतिः; हरिर्विप्रशरीरस्थो भुंक्ते भोजयते हरिः|
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पंचभिरेव च; हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु|
ओम् तत्सद् ब्रह्मार्पणमस्तु|
( अपसव्यं )
सकृत्सकृत्सर्वेभ्य आपो दत्वा|

354

( सव्यं )
अपोशनं दत्वा|
( अपसव्यं )
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः; त्रींल्लोकान् व्याप्य भूतात्मा भुंक्ते विश्वभुगव्ययः|
अनेन चट(ब्राह्मण)भोजन समाराधनेन श्री पितृस्वरूपी जनार्दन वासुदेवः प्रीयतां नमम|
ईशान विष्णु कमलासन कार्त्तिकेय वह्निनत्रयार्क रजनीशगणेश्वराणां;
क्रौंचामरेन्द्र कलशोद्भव कश्यपानां पादान्नमामि सततं पितृमुक्तिहेतोः|
( सव्यं )
देवाः अमृतं कुरुत|
( अपसव्यं )
ओम् तत्सत्पितरः अमृतं जुषध्वं|
अपेक्षितं याचितव्यं त्याज्यं चैवाऽनपेक्षितं; उपविश्य सुखेनैव भोक्तव्यं स्वस्थमानसैः|
विद्यते शाकपाकानां रोचते यत्तु गृहयतां; अरूच्यं तत् परित्याज्यं संकोचं नैव कारयेत्|
( सव्यं ) ( गायत्रीं पठित्वा )

ओम् मधुवाता ऋतायते मधुक्षरंति सिंधवः; माधवीर्नः संत्वोषधीः|
मधुनक्तमु तोषसो मधुमत्पार्थिव ॅ रजः; मधुद्यौरस्तुनः पिता|
मधुमान्नो वनस्पतिर्मधुमा ॅ २ऽ अस्तु सूर्यः; माध्वीर्गावो भवन्तु नः|
मधु मधु मधु|

तृप्तान् ज्ञात्वा; विकिरः कार्यः|

विकिरासनं|
( अपसव्यं )

असंस्कारप्रपन्नानां त्यागिनां कुलदोषिणां; उच्छिन्नभागधेयानां दर्भेषु विकिरासनं| ( पिंडं गृहीत्वा )

अग्निदग्धास्तु ये जीवा येऽप्यदग्धा कुले मम; भूमौ दत्तेन पिंडेन तृप्ता यांतु परां गतिं|

ये अग्निदग्धा ये अनग्निदग्धा अस्मत् कुल प्रसूतास्तेभ्यो अयं विकिरपिंडः स्वधा नमः|

तदुपरि तिलांबु निनयेत्|
( सव्यं ) ( आचमनं )
( अपसव्यं )
पितृभ्यः सकृत्सकृदपो दत्वा|



( सव्यं )
देवेभ्यः सकृत्सकृदपो दत्वा| ( पूर्ववद्गायत्रीं जप्त्वा )
ओम् मधुवाता ऋतायते मधुक्षरंति सिंधवः; माधवीर्नः संत्वोषधीः|
मधुनक्तमु तोषसो मधुमत्पार्थिव ॅ रजः; मधुद्यौरस्तुनः पिता|
मधुमान्नो वनस्पतिर्मधुमा ॅ २ऽ अस्तु सूर्यः; माध्वीर्गावो भवन्तु नः|
मधु मधु मधु| ( शेषमन्नं किं क्रियतां; इष्टैः सह भुज्यतां )
पिंडदानं|
( दक्षिणाग्रंसमूलंकुशमास्तीर्यतद्दक्षिणतःपंक्तिरूपेणकुशत्रयंपित्रादीनां पिंडदानार्थं दक्षिणग्रभेवसमास्तीर्य; अपहताति पिंजूल्यारेखां कृत्वा एतपितर इति नियछते त्यंतेन पितृनावाहयेत्; ततः पात्रे जलमादाय )
( अपसव्यं )

१, अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहाः सपत्नीकाः अमुकामुकामुकशर्मणो वसुरुद्रादित्यरूपाः अवनेनिक्ष्व|( उदकोपस्पर्शः )
२, अमुकगोत्रा अस्मन्मातामहप्रमातमहवृद्धप्रमातामहाः सपत्नीकाः अमुकामुकामुकशर्मणो वसुरुद्रादित्यरूपाः अवनेनिक्ष्व| ( उदकोस्पर्शः )
३, अमुकगोत्रा अस्मत्पत्न्याद्याप्तानता समस्तपूर्वजा अमुकामुका वसुरूपा अवनेनिक्ष्व| ( उदकोस्पर्शः )
१, अमुकगोत्र पितः अमुकशर्मन् वरुणरूप एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पित्रे नमम|| ( उदकोपस्पर्शः )
२, अमुकगोत्र पितामह अमुकशर्मन् प्रजापतिरूप एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितामहाय नमम|| ( उदकोपस्पर्शः )
३, अमुकगोत्र प्रपितामह अमुकशर्मन् अग्निरूप एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रपितामहाय नमम|| ( उदकोपस्पर्शः )
४, अमुकगोत्रे मातः अमुकीदेविदे वरुणरूपे एष ते पिंडो| याश्चात्र त्वानुयांश्चत्व मनु तस्यै ते स्वधा–इदं मात्रे नमम|| ( उदकोपस्पर्शः )
५, अमुकगोत्रे पितामहि अमुकीदेविदे प्रजापतिरूपे एष ते पिंडो| याश्चात्र त्वानुयांश्चत्व मनु तस्यै ते स्वधा–इदं पितामह्यै नमम|| ( उदकोपस्पर्शः )
६, अमुकगोत्रे प्रपितामहि अमुकीदेविदे अग्निरूपे एष ते पिंडो| याश्चात्र त्वानुयांश्चत्व मनु तस्यै ते स्वधा–इदं प्रपितामह्यै नमम|| ( उदकोपस्पर्शः )

356

७, अमुकगोत्रे सापत्नमातः अमुकीदेविदे वरुणरूपे एष ते पिंडो| याश्चात्र त्वानुयांश्चत्व मनु तस्यै ते स्वधा–इदं सापत्नमात्रे नमम|| ( उदकोपस्पर्शः )
८, अमुकगोत्र मातामह अमुकशर्मन् वरुणरूप एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं मातामहाय नमम|| ( उदकोपस्पर्शः )
६, अमुकगोत्र प्रमातामह अमुकशर्मन् प्रजापतिरूप एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं प्रमातामहाय नमम|| ( उदकोपस्पर्शः )
१०, अमुकगोत्र वृद्धप्रमातामह अमुकशर्मन् अग्निरूप एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं वृद्धप्रमातामहाय नमम|| ( उदकोपस्पर्शः )
११, अमुकगोत्रे मातामहि अमुकीदेविदे वरुणरूपे एष ते पिंडो| याश्चात्र त्वानुयांश्चत्व मनु तस्यै ते स्वधा–इदं मातामह्यै नमम|| ( उदकोपस्पर्शः )

१२, अमुकगोत्रे प्रमातामहि अमुकीदेविदे प्रजापतिरूपे एष ते पिंडो| याश्चात्र त्वानुयांश्चत्व मनु तस्यै ते स्वधा–इदं प्रमातामह्यै नमम|| ( उदकोपस्पर्शः )
१३, अमुकगोत्रे वृद्धप्रमातामहि अमुकीदेविदे अग्निरूपे एष ते पिंडो| याश्चात्र त्वानुयांश्चत्व मनु तस्यै ते स्वधा–इदं वृद्धप्रमातामह्यै नमम|| ( उदकोपस्पर्शः )
१४, अमुकगोत्रायै पत्न्यै अमुकीदेविदायै वरुणरूपायै एष ते पिंडो| याश्चात्र त्वानुयांश्चत्व मनु तस्यै ते स्वधा–इदं पत्न्यै नमम|| ( उदकोपस्पर्शः )
१५, अमुकगोत्राय सुताय अमुकशर्मणे (सपत्नीक) वरुणरूपाय एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं सुताय (सपत्नीकाय) नमम|| ( उदकोपस्पर्शः )
१६, अमुकगोत्रायै सुतायै अमुकीदेविदायै (सभर्तृका) वरुणरूपायै एष ते पिंडो| याश्चात्र त्वानुयांश्चत्व मनु तस्यै ते स्वधा–इदं सुतायै(सभर्तृकाय) नमम|| ( उदकोपस्पर्शः )
१७, अमुकगोत्राय पितृव्याय अमुकशर्मणे (सपत्नीक) वरुणरूपाय एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं पितृव्याय(सपत्नीकाय) नमम|| ( उदकोपस्पर्शः)
१८, अमुकगोत्राय मातुलाय अमुकशर्मणे (सपत्नीक) वरुणरूपाय एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं मातुलाय (सपत्नीकाय) नमम|| ( उदकोपस्पर्शः)
१६, अमुकगोत्राय भ्रात्रे अमुकशर्मणे (सपत्नीक) वरुणरूपाय एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं भ्रात्रे (सपत्नीकाय) नमम|| ( उदकोपस्पर्शः )
२०, अमुकगोत्रायै पितृभगिन्यै अमुकीदेविदायै (सभर्तृका) वरुणरूपायै एष ते पिंडो| याश्चात्र त्वानुयांश्चत्वमनु तस्यैतेस्वधा–इदंपितृभगिन्यै(सभर्तृकाय)नमम||(उदकोपस्पर्शः)

357

२१, अमुकगोत्रायै मातृभगिन्यै अमुकीदेविदायै (सभर्तृका) वरुणरूपायै एष ते पिंडो| याश्चात्रत्वानुयांश्चत्वमनुतस्यै ते स्वधा–इदंमातृभगिन्यै(सभर्तृकाय)नमम||(उदकोपस्पर्शः)
२२, अमुकगोत्रायै आत्मभगिन्यै अमुकीदेविदायै (सभर्तृका) वरुणरूपायै एष ते पिंडो| याश्चात्रत्वानुयांश्चत्वमनु तस्यैतेस्वधा–इदंआत्मभगिन्यै(सभर्तृकाय)नमम||(उदकोपस्पर्शः)
२३, अमुकगोत्राय श्वशुराय अमुकशर्मणे (सपत्नीक) वरुणरूपाय एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं श्वशुराय (सपत्नीकाय) नमम|| (उदकोपस्पर्शः)
२४, अमुकगोत्राय गुरवे अमुकशर्मणे (सपत्नीक) वरुणरूपाय एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं गुरवे (सपत्नीकाय) नमम|| ( उदकोपस्पर्शः )
२५, अमुकगोत्राय शिष्याय अमुकशर्मणे (सपत्नीक) वरुणरूपाय एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं शिष्याय (सपत्नीकाय) नमम|| ( उदकोपस्पर्शः )

२६, अमुकगोत्राय मित्राय अमुकशर्मणे (सपत्नीक) वरुणरूपाय एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं मित्राय (सपत्नीकाय) नमम|| ( उदकोपस्पर्शः )
२७, अमुकगोत्राय आप्ताय अमुकशर्मणे (सपत्नीक) वरुणरूपाय एष ते पिंडो| ये चात्र त्वानुयांश्चत्व मनु तस्मै ते स्वधा–इदं आप्ताय (सपत्नीकाय) नमम|| ( उदकोपस्पर्शः )
१, आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः;
वंशद्वयेऽस्मिन्मम दासभूता भृत्यास्तथैवाश्रित सेवकाश्च|
मित्राणि सख्यः पशवश्च वृक्षा दृष्टाश्च पृष्टाश्च कृतोपकाराः;
जन्मान्तरे ये मम सङ्गताश्च तेभ्यः स्वधा पिण्डमहं ददामि||
२, पितृवंशे मृता ये च मातृवंशे तथैव च; गुरुश्वशुरबन्धूनां ये चान्ये बान्धवाः स्मृताः|
ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः; क्रियालोपगताश्चैव जात्यन्धाः पङ्गवस्त्था|
विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम; तेभ्यः पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतु||
३, असिपत्रवने घोरे कुम्भीपाके च ये गताः; तेषामुद्धरणार्थाय तेभ्यः पिण्डं ददाम्यहम्|
४, उच्छिन्नकुलवंशानांयेषां दाता कुले न हि; घर्मपिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठतु||
( उदकोपस्पर्शः )
( पिंडेषु प्रत्यवनेजनम् )
ओम् अत्रपितरो मादयद्ध्वँ यथाभाग मावृषायद्ध्वम्| ( अग्रदक्षिणावर्त्तनेन दक्षिणाभिमुखो भूत्वा श्वासं नियम्य पितृन् ध्यात्वा श्वासमविमुंचत्स्तथैव वर्त्तमानोजपेत्)
अमीमदन्त पितरो यथाभाग मावृषायिषत| ( अथांजलिकृतोजपति )
ओम् नमोवः पितरः पितरो नमो वोगृहान्नः पितरो दत्तसतो वः पितरो देष्मे|
एतद्वः पितरो वासः| ( इति सूत्रदानं )



( सव्यं )
पिंडानामर्चनम्|
संकल्पः– अस्मत्कुल अभिवृद्धयर्थं सव्येन पिण्डपूजां करिष्ये|
पिंडसंस्थाः पितरः अत्रं स्वधा० पिंडसंस्थाः पितरः वस्त्रं स्वधा०
पिंडसंस्थाः पितरः गन्धं स्वधा० पिंडसंस्थाः पितरः तिलाक्षताः स्वधा०
पिंडसंस्थाः पितरः इमानि भृङ्गराजसहितानि पुष्पाणि तुलसीदलानि च स्वधा०
पिंडसंस्थाः पितरः धूपं स्वधा० पिंडसंस्थाः पितरः दीपं स्वधा०
पिंडसंस्थाः पितरः नैवेद्यं स्वधा०पिंडसंस्थाः पितरः मुखवासार्थे पूगीफलं ताम्बूलंस्वधा०
पिंडसंस्थाः पितरः यथाशक्ति रजतं तदभावे यत्किन्चिद्वयावहारिकं द्रव्यं स्वधा|
( अपसव्यं )

संकल्पः– एभिः कृतैः पिंडदानैः अस्मत्पितृणाम् अक्षय्या तृप्तिरस्तु|
काले श्राद्धं भवतु; भवतु| गयाश्राद्धावाप्तिरस्तु| गयायां पिंडदानेन यातृप्तिःसातृप्तिरस्तु| स्वर्गेवासोऽस्तु|
अर्घदानम्|
पितरः पिंडरूपिणः; अयमर्घो मया दत्तः पुत्रपौत्रविवर्द्धये| ( नमस्कारः )
पितादेवः पिताचार्यः पिताधर्मः पितागुरुः; तुष्टे पितरि सन्तुष्टा देवानामपि देवताः|
पिंडानामर्चनविधेः परिपूर्णतास्तु; अस्तु|
( सव्यं ) ( आचमनं ) ( तूर्ष्णीसुसंप्रोक्षितमित्यादि )
( शिवा आपः सन्तु० सौमनस्यमस्तु० अक्षतं चारिष्टं चास्तु० समाचाराद् दीर्घमायुः शान्तिःपुष्टिस्तुष्टिस्चास्तु )
( अपसव्यं )
१, अमुकगोत्राणां अस्मत्पितृपितामहप्रपितामहानां सपत्नीकानां अमुकामुकामुकशर्माणां वसुरुद्रादित्य स्वरूपाणां दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )
२, अमुकगोत्राणां अस्मन्मातामहप्रमातमहवृद्धप्रमातामहानां सपत्नीकानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यरूपाणां दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| (उदकोपस्पर्शः)
३, अमुकगोत्राणां अस्मत्पत्न्याद्याप्तानतानां समस्तपूर्वजानां अमुकामुकानां वसुरूपाणां दत्तमिदंश्राद्धमक्षय्यमस्तु; अस्त्वक्षय्यं| ( उदकोपस्पर्शः )
( सव्यं )
अघोराः पितरः सन्तु–सन्त्वघोराः पितरः० गोत्रं नोऽभिवर्द्धतां– अभिवर्द्धतां वो गोत्रं|



( अपसव्यं )
( ततो न्युब्जपात्रस्योपरि स्थापितानि पवित्राणि पिंडेषु दत्तवा न्युब्जीकृतार्घपात्रमुत्तानं कुर्यात् )( स्वधां वाचयिष्ये; वाच्यताम् )
१, अमुकगोत्रेभ्यः अस्मत् पितृपितामहप्रपिमतामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः सपत्नीकेभ्यः वसुरुद्रादित्यरुपेभ्यः स्वधोच्यतां; अस्तु स्वधा|
२, अमुकगोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यरुपेभ्यः स्वधोच्यतां; अस्तु स्वधा|
३, अमुकगोत्रेभ्यः अस्मत्पत्न्याद्याप्तानतेभ्यःसमस्तपूर्वजेभ्यः अमुकामुकभ्यः वसुरूपेभ्यः स्वधोच्यतां; अस्तु स्वधा|
( जलमादाय )

ओम् ऊर्जंवहन्ती रमृतंघृतंपयः कीलालम्परिस्तुत ँ स्वधा स्थ तर्पयत मेपितृन्| ( अनेन पिंडोपरिधारां दद्यात् )
( सव्यं )
विश्वेदेवाः प्रीयतामिति ब्रुवे| ( इति जलदानं )
( अपसव्यं ) ( पिंडपात्राणां चालनं )
( सव्यं )
अस्य श्राद्धस्य कृत प्रतिष्ठा सिद्धयर्थं दास्यमानां दक्षिणां मुखवासं च विश्वेभ्यो देवेभ्यः स्वाहा–इदं विश्वेभ्यो देवेभ्यो नमम|
( अपसव्यं )
१, अस्य श्राद्धस्य कृत प्रतिष्ठा सिद्धयर्थं दास्यमानां दक्षिणां मुखवासं च अमुकगोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मेभ्यः वसुरुद्रादित्येभ्यः यथायथा विभागं वः स्वधा|
२, अस्य श्राद्धस्य कृत प्रतिष्ठा सिद्धयर्थं दास्यमानां दक्षिणां मुखवासं च अमुकगोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यः अमुकामुकामुकशर्मभ्यः वसुरुद्रादित्यरुपेभ्यः यथायथा विभागं वः स्वधा|
३, अस्य श्राद्धस्य कृत प्रतिष्ठा सिद्धयर्थं दास्यमानां दक्षिणां मुखवासं च अमुकगोत्रेभ्यः अस्मत्पत्न्याद्याप्तानतेभ्यःसमस्तपूर्वजेभ्यः अमुकामुकभ्यः वसुरूपेभ्यः यथायथा विभागं वः स्वधा|



( सव्यं )
दातारो नोऽभिवर्द्धन्तां– अभिवर्द्धन्तां वो दातारः०
वेदाः संततिरेव च–अभिवर्द्धतांवोवेदाः; अभिवर्द्धतां वः संतति०
श्रद्धा च नो मा व्यगमत्–मा व्यगमद् वः श्रद्धा० बहुदेयं च नोऽस्तु– अस्तुवो बहुदेयम्०
अन्नं च नोबहुभवेत्–भवतु वो बह्वन्नम्० अतिथींश्चलभेमहि–लभध्वं चातिथीन्०
याचितारश्चनः सन्तु–सन्तु वो याचितारः० मा च याचिष्म कंचन–मा याचध्वं कंचन०
एता एवाशिषः सन्तु–एताः सत्याशिषः सन्तु|
संकल्पः– अद्येत्यादि शुभपुण्यतिथौ ( अपसव्यं ) अमुकगोत्राणां पितृपितामहप्रपितामहानां सपत्नीकानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यरूपाणां अमुकगोत्राणां अस्मन्मातामहप्रमातमहवृद्धप्रमातामहानां सपत्नीकानां अमुकामुकामुकशर्मणां वसुरुद्रादित्यरूपाणां अमुकगोत्राणां अस्मत्पत्न्याद्याप्तानतानां

समस्तपूर्वजेनां अमुकामुकानां वसुरूपानां मम पितुः सकृन्महालय श्राद्ध निमित्तस्य पार्वणविधिना विश्वेदेवा पूर्वकस्य अर्घपिंडसहितस्य यः कश्चित्
मंत्रोक्तविधेर्यन्यूनमतिरिक्तं तत्सर्वं ब्राह्मणानां श्री विष्णोश्च प्रसादात् परिपूर्णम् अस्तु|
शास्त्रोक्त पुण्यफलावाप्तिरस्तु|
यत्कृतंतत्सुकृतमस्तु|
( सव्यं )
स्वस्ति भवन्तो ब्रुवन्तु| ( इति वैश्वदेविकानां जलदानं )
( अपसव्यं )
ततः सर्वे स्वस्तितेस्तु इति ब्रुयुः| ( इति पैतृकानां जलदानं )
( सव्यं )
( पितादेवः पिताचार्यः पिताधर्मः पितागुरुः; तुष्टे पितरि सन्तुष्टा देवानामपि देवताः )
( अपसव्यं )
ओम् वाजे वाजे वत वाजिनोनो धनेषु विप्राऽअमृताऽरुतज्ञा;
अस्य मध्वः पिबत मादयध्वन्तृप्तायात पथिभिर्देवयानैः|
उत्तिष्ठन्तु पितरः|
( सव्यं )
विश्वेदेवैः सह|



( अपसव्यं )
ओम् आमावाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे;
आमागन्ताम्पितरा मातरा चामासोमोऽअमृतत्वेन गम्यात्| ( अनेन प्रदक्षिणां जलधारां दद्यात् ) ( पिंडस्वस्थाने वासः; पिंडस्थाने इदमत्र चंदनंपुष्पं; कुलेकुलदीपकवृद्धिरस्तु ) ( सव्यं ) ( आचमनं; स्वयमेव तिलकं कुर्यात् )

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च; प्रयच्छन्ति तथाराज्यं प्रीतानृणांपितामहाः|

स्वस्तितेऽस्तु|

वामदेव्य जपः|
विनियोगः– कयानश्चित्रेति महावामदेव ऋषिः गायत्रीच्छन्दः विश्वेदेवादेवताः न्यूनातिरिक्तदोषपरिहारार्थे शान्त्यर्थे च् जपे विनियोगः|

३ र ४ २ ४र५ १ र २१र २ १ २ र २

ओम् काऽ५या। नश्चाऽ३इत्राऽ३आभुवात्। ऊ। तीसदावृधःस। खा। औऽ३होहाइ।

१ २ ३ र२ १ १ २

कयाऽ२३शचाइ। ष्ठयौहोऽ३। हुम्माऽर। वाऽ२र्तोऽ३५हाइ॥

३ र ४ २ ४र५ १ २र१ र २ १ २ र२

काऽ५स्त्वा। सत्योऽ३माऽ३दानाम्। मा। हिष्ठोमात्सादन्ध। सा। औऽ३होहाइ।

१ २ ३ र २ १ १ २

दृढाऽ२३चिदा। रुजौहोऽ३। हुम्माऽर। वाऽ२सोऽ३५हाइ॥

३ र ४ २ ४र ५ १ २र१ २र १ २ र २

आऽ५भी। षुणाऽ३ःसाऽ३खीनाम्। आ। विताजराइतॄ। णाम्। औऽ२३होहाइ।

१ २ ३ र २ १ १ २

शताऽ२३म्भवा। सियौहोऽ३। हुम्माऽर। ताऽ२योऽ३५हाइ॥३॥

362

१ २ ३१ २र ३ २ ३ १ ३२ १ २ २ ३ १ २ ३२

ओम् कयानश्चित्र आभुवदूती सदावृधः सखा। कया शचिष्ठया वृता॥

१ २ ३ १ २र ३ १ २ ३१ २ ३ १ २ ३ २३ १२

कस्त्वा सत्यो मदानां मँ हिष्ठो मत्सदन्धसः। दृढा चिदारुजे वसु॥

३२उ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १२

अभी षु णः सखीनामविता जरितॄणाम्। शतं भवास्यूतये॥

३ २ ३ १ २ ३१ २ ३ १ २ ३२ ३ १२

ओम् स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः|

३ २ ३ २ ३ १ २ ३ २ ३ २३ १२ ३ २ ३२३ १ २

स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु|ओम् स्वस्तिनोबृहस्पतिर्दधातु||

यस्य स्मृत्या च नामोक्त्या तपःश्राद्धक्रियादिषु; न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतं|
कायेन वाचा मनसेन्द्रियैर्वाबुद्धयात्मना वा प्रकृतिस्वभावात्;
करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामि|
प्रमादात्कुर्वतां कर्म प्रच्यवेत्यद्धरेषुयत्; स्मरणा देवतद्विष्णोः संपूर्णस्यादितिश्रुतिः|
स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्योनजातुचित्; सर्वे विधि निषेधाः स्युरेतयोरेवकिंकराः||
–महालयश्राद्ध कृतस्य विधेः परिपूर्णमस्तु|

गोग्रासससंक्ल्पः–सौरभेयः सर्वहिताः पवित्राः पुण्यराशयः|

प्रतिगृह्णंतु मे ग्रासं गावः त्रैलोक्य मातरः||–इदं गोभ्यो न मम||
( नीवीती )

श्वाग्रासससंक्ल्पः– द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ|

ताभ्यां अन्नं प्रदास्यामि रक्षेतां पथि मां सदा||–इदं श्वभ्यां न मम||
( अपसव्यं )

वायसबलिसंक्ल्पः–यमोऽसि यमदूतोऽसि वायसोऽसि महामते|

अहोरात्रकृतं पापं बलिं भक्षतु वायसः||–इदं वायसेभ्यो न मम||

|| इति महालय श्राद्ध विधिः ||